तं वान **रा** णामधिपं पर्यष्वजत पीडितम् ।
रामः सौहृदमालंब्य हर्षयामास हर्षितः. ॥ ४५

पावकं [1]**म** थनोद्भूतं चक्रतुस्तौ [2]प्रदक्षिणम् ।
सखायौ रामसुग्रीवौ मलयाद्रौ बभूवतुः ॥ ४६

तौ नाभि **ज** ग्मतुस्तृप्तिमन्योन्यं वीक्ष्य [3]सन्मती ।
रामः प्राह, 'सखा मे [4]त्वमेकं दुःखं सुखं च नौ.' ॥ ४७

स रामा **य** ददौ शाखां भङ्क्त्वा सालस्य [5]पुष्पिताम् ।
लक्ष्मणाय मरुत्पुत्रश्चंदनस्य मनोरमाम्. ॥ ४८

[6]तस्यां रा **ज** सुतो रामः सुग्रीवश्च महामनाः ।
निषसाद महाभागो लक्ष्मणश्चारुलक्षणः ॥ ४९

रामं व **य** स्यः सुग्रीव उवाच, 'रघुनंदन ! ।
[7]वालिनो मे महाबाहो ! भयार्तस्याभयं कुरु.' ॥ ५०

तमाह **रा** घवो [8]मित्रमुपकारफलं, 'सखे ! ।
वानरेंद्रं [9]वधिष्यामि तव दारापहारिणम्.' ॥ ५१

सोऽपि रा **म** मुवाच'चाहं समानेष्यामि जानकीम्, ।
[10]अनुमानात्तु जानामि मैथिली सा न संशयः. ॥ ५२

रक्षसा **श्री** मती व्योम्नि [11]ह्रियमाणा बलीयसा ।
दृष्टा सा राम रामेति [12]क्रोशंती लक्ष्मणेति च. ॥ ५३

---

१. मथनात् (काष्ठाला काष्ठ घांसून) उद्भूतः (उत्पन्न झालेला). २. प्रगतो दक्षिणं प्रदक्षिणस्तम् । 'द्वितीया प्राप्तापन्नादिभिः' इति द्वितीया तत्पुरुषः. 'सखायौ' हें प्रथमा द्विवचनाचें रूप. ३. सम्+मति+प्र० द्वि०=सम्यक् मतिर्ययोस्तौ. नौ=आवयोः. ४. एकं=समानं. [स० ५ श्लो० १७.] ५. पुष्पाणि संजातानि अस्यां सा ताम् । 'तदस्य संजातं तारकादिभ्यः' सि० कौ० पृ० १६२. ६. सुग्रीव हा मैत्रीमुळें विश्वास उत्पन्न झाल्यावर रामाबरोबर एकासनावर बसला, त्यापूर्वी सुग्रीव हा साशंक होता असें दिसतें. चारुलक्षणः=सुलक्षणः. ७. 'वालिनः' ही पंचमी. 'भीत्रार्थानां भयहेतुः'. सि० कौ० पृ० ६१. हें अर्ध वा० रामायणांत आहे. [सर्ग ५ श्लो० २३.] ८. मिद्यति (स्निह्यति) इति मित्रम्. [सर्ग ८ श्लो० २१.] ९. 'वधिष्यामि' हा आर्षप्रयोग आहे. वास्तव 'हनिष्यामि' हाच युक्ततर पाठ आहे. सि० कौ० पृ० २२४. हें अर्ध वा० रामायणांत आहे. [सर्ग ५ श्लो० २६.] १०. हें अर्धही वा० रामायणांत आहे. [स० ६ श्लो० ९.] ११. हृ+कर्मणि शानच्. 'आने मुक् अंगस्य अतः' या नियमानें 'आन' याबद्दल 'मान' झालें. सि० कौ० पृ० ३१०. १२. भूदिवाद्योः शतुर्यम् स्त्रियाम्. सि० कौ० पृ० ४५.

सावान **रा** णामस्माकं मध्ये राम! मुमोच यत् ।
उत्तरीयं सभूषं तद्दर्शयिष्यामि तेऽनघ!' ॥ ५४

रामस्त **म** ब्रवीत्तूर्णं, 'सखे! तद्दर्शयाद्य माम् ।
आनयोत्तिष्ठ सुग्रीव! किमर्थं प्रविलम्बसे?' ॥ ५५

कपिरा **ज** स्तस्य गिरेर्गुहां तूर्णं प्रविश्य तत् ।
आनीय दर्शयामास सांबरं रत्नभूषणम्. ॥ ५६

उत्तरी **य** मथालोक्य रामस्तद्भूषणानि च ।
'हा प्रिये! जानकी'त्युक्त्वा प्ररुदन्नपतत्क्षितौ. ॥ ५७

अलंका **रा** नुत्तरीयं हृदि कृत्वा रुदन्बहु ।
उवाच लक्ष्मणं, 'पश्य प्रियाया भूषणानि मे.' ॥ ५८

स वाक्य **म** ब्रवी,'जाने न केयूरे न कुंडले ।
नूपुरे त्वभिजानामि नित्यं पादाभिवंदनात्.' ॥ ५९

कपिरा **ज** मथापृच्छद्रक्षसा निजमृत्यवे ।
'कं देशं मे प्रिया सीता नीता जानासि चेद्वद. ॥ ६०

नयामि **य** मलोकं तं सह सर्वैर्निशाचरैः' ।
इति श्रुत्वा प्रभोर्वाक्यमुवाच कपिनायकः ॥ ६१

'न जाने **ज** गतां नाथ तस्य देशं कुलं बलम् ।
सत्यं तु प्रतिजानामि त्यज शोकमरिंदम! ॥ ६२

अहं प्र **य** त्नं राजेंद्र! करिष्याम्यचिरात्तथा ।
यथा त्वं मुदिरश्याम राम! प्राप्स्यसि मैथिलीम्. ॥ ६३

मयापि **रा** घव! प्राप्तं व्यसनं स्त्रीवियोगजम् ।
परंतु नैवं शोचामि प्राकृतो वानरोऽपि सन्.' ॥ ६४

---

१. देहाच्या ऊर्ध्व भागाला आच्छादन करावयाचें वस्त्र. खालच्या भागाच्या वस्त्राला अंतरीय म्हणतात. २. स+भूषम्=भूषाभिः सहवर्तमानम्=दागिन्यांसहित असलेलें. सर्ग ६ श्लो० ११-१२ पहा. ३. शीघ्रम्. ४. अंबरेण (वस्त्रेण) सहवर्तमानम् । रत्नभूषणमिति जातावेकवचनम् । रत्नखचितानि भूषणानि इत्यर्थः. ५. हें अर्ध वा० रामायणांत आहे. [सर्ग ६ श्लो० १७.] ६. के बाहुशिरसि याति इति केयूरम् ते. केयूर हें बाहुभूषण आहे. कुंडल कर्णभूषण व नूपुर पादभूषण. ७. 'नूपुरे त्वभिजानामि' या लक्ष्मणाच्या उक्तीचा भाव सहृदय वाचकांच्या लक्ष्यांत आलाच असेल. हें अर्ध वा० रामायणांत आहे. [सर्ग ६ श्लो० २२-२३.] ८. प्रतिज्ञा करणें हें. अर्ध वा० रामायणांत आहे. [स० ७ श्लो० १-३.] ९. स्त्रीवियोगात् जायते इति. १०. साधारण बुद्धीचा.

इति प्रे **म** वतः श्रुत्वा हितं वाक्यं रघूद्वहः ।

संपरिष्वज्य बाहुभ्यां सखायमिदमब्रवीत्. ॥ ६५

'यत्तव **श्री** मतः कार्यं प्रथमं तत्करोम्यहम्' ।

'त्वं प्रयत्नं कुरु सखे! सीतायाः परिमार्गणे. ॥ ६६

कथं वै[1] **रा** ग्निरुद्भूतः सुग्रीव! हृदि वालिनः? ।

तत्त्वं[2] कथय तत्त्वेन करिष्ये प्रियमेव ते. ॥ ६७

हृदि मे **म** न्युरुद्भूतः श्रुत्वा त्वामवमानितम् ।

जानीहीषुर्मया[3] सृष्टो[4] निरस्तश्च रिपुस्तव[5].' ॥ ६८

कपिः प्रां[6] **ज** लिरा,'हार्य! दुंदुभेः पूर्वजः[7] सुतः ।

मायावी[8] नाम तेजस्वी बलदप्तो महासुरः ॥ ६९

स्त्रीकृते **य** दभूद्वैरं तेन राघव! वालिनः ।

तद्वोरमेकदा शत्रुः किष्किंधाद्वारमागतः[9] ॥ ७०

आहूय **रा** त्रौ युद्धाय [10]नंदति स्म स कोपनः ।

सुप्तो वाली स्वनं श्रुत्वा क्रोधान्न ममृषे प्रभो! ॥ ७१

हंतुं त **म** सुरं वाली निःसृतोऽहं च राघव! ।

दृष्ट्वा मां वालिनं भीतः प्राद्रवत्सोऽसुरस्तदा. ॥ ७२

विवरं **ज** गतां नाथ! जगल्या जवनोऽहितः[11] ।

संप्राविशत्स मायावी मायावीर्यो[12] रघूत्तम! ॥ ७३

कौसल्ये **य**! बिलद्वारि स्वपादशपथैः[13] स्वयम् ।

अस्थापयत्स मां वाली प्रविशंतं निवार्य सः ॥ ७४

रघुरा **ज**! ततस्तूर्णं विशति स्म महाबिलम्. ।

---

१. विशेषेण शत्रून् ईरयति (कंपयति) इति वीरः तस्य भावो वैरम् । वैरमेवाग्निः. रूपक स०. २. तत् त्वं=तें तूं. तस्य भावः तत्त्वं याथार्थ्यम्. जसें असेल तसें; खरें खरें. ३. जानीहि (जाण, समज) ईषुः मया. ४. सृष्टः=सोडला आहे. निरस्तः=प्रतिहत केला आहे. [सर्ग ८ श्लो० ४४.] ५. रपति अनिष्टमिति रिपुः. ६. प्रबद्धः अंजलिः येन सः आह आर्य. ७. ज्येष्ठः. ८. हा मयासुरास हेमा नामक स्त्रवेंश्येपासून झालेला ज्येष्ठ पुत्र. हा वालीच्या हातून मरण पावला. (किष्किंधाकांड—सर्ग १०.) मयासुराचा दुसरा पुत्र दुंदुभि. ९. 'अयमितिहासः क्वचित् पुराणे शोधनीयो बहुदर्शिभिः.' १०. ननर्द. वर्तमानकाळाच्या धातुरूपापुढें स्म आल्यास लिट्सारखा अर्थ होतो. कोपनः=क्रोधयुक्तः. ११. जव(वेग)युक्त. १२. माया (कपटं) एव वीर्यं (बलं) यस्य सः. १३. आपल्या पायांची शपथ घालून.

तस्य तत्र प्रविष्टस्य साग्र[1]संवत्सरो गतः ॥ ७५

नर्दतां **य** स्तदा तत्र दैत्यानां निनदोऽभवत् ।
स श्रोत्रमागतो मे नो[2] **वा**लिनः शौर्यशालिनः. ॥ ७६

रक्तपू **रा** द्बिलात्तस्मात्सफेनाद्राम! निःसृतात् ।
भ्रातुर्वधमहं मत्वा भृशं शोकाकुलोऽभवम्. ॥ ७७

त्रिलस्य **म** हतो द्वारं[3] शिलया गिरि[4]मात्रया ।
पिधाय[5] चोदकं[6] कृत्वा **किष्किं**धामागतः सखे! ॥ ७८

तद्वृत्तं[7] **श्री** मतो ज्ञातं **वा**लिनो मंत्रिभिः प्रभो! ।
ततो[8]ऽहं तैः समागम्य समेतैरभिषेचितः ॥ ७९

न्यायेन **रा** ज्यं तत्तस्य मयि शासति[9] **रा**घव! ।
हत्वा तमसुरं **वा**ली **किष्किं**धामागतो गुहाम्. ॥ ८०

**का**कुत्स्थ! **म** त्वा मां शत्रुं राज्यकामं स[10] साहसी ।
इयेष भक्तं प्रणतं हंतुं बध्वा स्वमंत्रिणः ॥ ८१

मयाग्र **ज** इति क्षांतं समर्थेनापि निग्रहे ।
स निर्वासितवान्**राम**! वस्त्रेणैकेन मां कपिः. ॥ ८२

तस्माद्भ **य** मभूद्भूरि क्रांतवानखिलां महीम्[11] ।
**रा**माहमपविद्ध[12]श्च हृतदारश्च **वा**लिना. ॥ ८३

एतं [13]दु **रा** धर्षनगं **वा**लिनः कारणांतरे[14] ।
प्रविष्टोऽस्मि महाराज! वैरमेवमभून्महत्. ॥ ८४

---

१. 'साग्रः संवत्सरः' असें पाहिजे, कारण समस्तपदांत साग्रपद गुणीभूत होतें. किंचिद-धिकः संवत्सरः. २. नो=न. ओकारान्तमव्ययम् । शौर्येण शालते इति शौर्यशाली तस्य. ३. द्वौ प्रवेशनिर्गमौ रातीति द्वारम् । पृषोदरादित्वात् आत्वम्. ४. गिरिः प्रमाणमस्याः सा तया. प्रमाणे द्वयसज्दघ्नत्रादि. सि० कौ० पृ० १६३. ५. अपिधाय. कारिका पहा सि० कौ० पृ० ४६. ६. तिलांजलि देऊन, उदकक्रिया करून. ७. सर्ग १० श्लो० ६ पहा. ८. हें अर्ध वा० रामायणांत आहे. [सर्ग १० श्लो० ६.] समेत=सम्+इण्+क्त अभि+सिच्+णिच्+क्त. ९. शासति=शास्+शतृ=सप्त० प्र०. १०. सहसा (बलेन) निर्वृत्तम् । साहसं पंचविधम्. मनुष्यमारणं स्तेयं परदाराभिमर्षणम् । पारुष्यमनृतं चैव साहसं पंचधा स्मृतम् । अथवा सहसा अविवेचनेन कृतं कर्म साहसं तदस्यास्ति इति साहसी. ११. सर्ग १० श्लो० २६-२७ पहा. १२. त्यक्तः । हृताः दाराः यस्य सः. १३. ऋष्यमूकपर्वतम्. १४. अन्यत् कारणं कारणान्तरं तस्मिन् । मयूरव्यंसकादित्वात् समासः. पुढें कांहीं श्लोकानंतर तें कारण सांगितलें आहे. मतंग-शापलक्षणेन कारणविशेषेण.

उवाच **म**[1] धुहा रामस्तं सुग्रीवं शुचाकुलम् ।
[2]'आत्मानुमानात्पश्यामि मग्नस्त्वं शोके[3]सागरे ॥ ८५

सुग्रीव ! **ज**[4] हि शोकं मे शराः प्राणहरा रिपोः ।
[5]त्वामहं तारयिष्यामि कामं प्राप्स्यसि पुष्कलम्.' ॥ ८६

[6]प्राप्ताभ **य** उवाचाथो सुग्रीवो राघवं प्रभुम् ।
'वालिनः पौरु[7]षं श्रुत्वा विधत्स्व [8]यदनंतरम्. ॥ ८७

चतुरो **ज** लधीन्[9]ब्राह्मे मुहूर्ते नित्यमुत्थितः ।
[10]क्रामत्यनुदिते सूर्ये वाली व्यपगतक्लमः ॥ ८८

गुरूण्य **प** तः शैलशिखराणि स वीर्यवान् ।
ऊर्ध्वं कंदुकवत्क्षिप्त्वा प्रतिगृह्णाति राघव ! ॥ ८९

मनुष्य **रा** ज ! महिषो दुंदुभिर्नाम दारुणः ।
'मह्यं युद्धं प्र[11]यच्छे'ति स उवाच [12]महार्णवम्. ॥ ९०

नाहं स **म** र्थः; श्वशुरः शंकरस्य हिमा[13]चलः ।

---

१. मधुं मधुनामानं असुरं हन्तीति. 'मधुहन्' शब्दाची प्रथमा. शुचा (शोकेन) आकुलम्. २. हें अर्ध वा० रामायणांत आहे. ३. सर्ग १० श्लो० ३४-३५ पहा. ४. सोडून दे. ५. हें अर्ध वा० रामायणांत आहे. [स० १० श्लो० ३४.] ६. प्राप्तं अभयं येन सः. ७. बलवैभवम्. ८. यत् अनंतरम् करणीयम् तत् विधत्स्व (कुरु). ९. दोन घटिका रात्र राहिली आहे अशा वेळीं. [अष्टमो मुहूर्तो ब्राह्मः । ननु 'ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम्' इति रात्रेः पश्चिमयामे रूढिः । 'पूर्वरात्रे महारात्रस्ततश्चापररात्रकः । ब्राह्मोऽप्येते क्रमाद्यामाः' इति यादवप्रकाशः । तत्र हि ब्रह्मणो देवस्याध्ययनप्रवृत्तिं निमित्तीकृत्य ब्रह्मशब्दः प्रयुक्तः । नाडिकाद्वयवाचिनो हि मुहूर्तस्य यामवाचकत्वे दोषः । स च मुहूर्तो ब्रह्माधिदेवतावाचकश्च न भवतीति तन्न । ते च मुहूर्ताः ज्योतिषरत्नमालायाम्— 'रुद्राहिमित्रपितरो वसुवारिविश्वे वेधा विधिः शतमखः पुरुहूतवह्नी । नक्तंचरश्च वरुणार्यमयोनयश्च प्रोक्ता दिने दश च पंच तथा मुहूर्ताः ॥' 'निशामुहूर्ता गिरिशाजपादाहिर्बुध्न्यपूषाश्वियमाग्नयश्च । विधातृचन्द्रादितिजीवविष्णुस्तिग्मद्युतित्वाष्ट्रसमीरणाश्च ॥' इति दैवज्ञवल्लभोऽपि । 'ब्राह्मो मुहूर्तोभिजिदष्टमो यस्तस्मिन्नपाचं ककुभं विहाय । प्रशस्यते यानमशेषदिक्षु सर्वाणि कार्याणि च यांति सिद्धिम् ॥' यद्यपि दिवा निशि च ब्राह्ममुहूर्तसद्भावः तथाप्यत्र दिवैव प्रासेोऽष्टेति मंतव्यम् । 'नक्तंबुधोभौमशशांकमंदागुर्वर्कशुक्रादिनशक्तयः स्युः' इति श्रीपतिपद्धत्युक्तेः । प्रकाशकग्रहसूर्यस्य शुभग्रहगुरुशुक्रयोश्च दिवा बलीयस्त्वात् बलिषु श्रेष्ठग्रहेषु महाभाग्यता स्यात् । नारदीयसंहितायां च—'मध्यंदिनगते भानौ मुहूर्तोऽभिजिदाह्वयः । नाशयत्यखिलान्दोषान्पिनाकी त्रिपुरं यथा ॥' [नंदर्गीकरांची रघुवंशाची आवृत्ति—पृ० १०९ पहा.] १०. हें अर्ध वा० रामायणांत आहे. (सर्ग ११ श्लो० ४.) व्यपगतः क्लमो यस्य सः. ११. महिषाचें रूप घेऊन आलेला, महार्णवम्=सागरम्, सागराधिष्ठातृदेवताम्. १२. स० ११ श्लो० ९ पहा. १३. हिमयुक्तोऽचलः हिमाचलः.

तं याहीत्यब्रवीद्राम! सागरो वरदर्पितम्. ॥ ९१

श्वशुरः **श्री** गलस्यापि गेजेंद्रप्रतिमाः शिलाः ।
क्षिपंतं बहुगर्जंतं प्रादुर्भूयाब्रवीदिदम्. ॥ ९२

यो वान **रा** णामधिपो **वाली शक्रा**त्मजो बली ।
प्रदास्यति स ते युद्धं न त्वं मां क्लेष्टुमर्हसि. ॥ ९३

किष्किंधां **म** हिपः प्राप्य रुद्ध्वा द्वारं मदोद्धतः ।
ननर्द कंपयन्भूमिं दुंदुभिर्दुंदुभिर्यथा. ॥ ९४

खुरैः स **ज** गतीं मत्तो दारयामास भूरुहान् ।
भंजन्द्वारं विषाणाभ्यामालिखन्करिराडिव. ॥ ९५

तं लीला **य** मरिं **वाली** निष्क्रम्यांतःपुराद्रुषा ।
उवाच, 'दुंदुभे! प्राणान्रक्ष त्वं विदितोऽसि मे.' ॥ ९६

'कपे! गि **रा** किमनया स्त्रीर्णामंतिक उक्तया? ।
मह्यं युद्धं प्रयच्छाद्य ततो ज्ञास्यामि ते बलम्.' ॥ ९७

श्रुत्वैवं **म** हिषप्रोक्तं **वा**लिना हेममालिना ।
निहतो लीलया क्षिप्तो वेगेनैकेन योजनम्. ॥ ९८

राजरा **ज**! तमाविध्य गजायुतबलं खलम् ।
गृहीत्वा शृंगयोर्दूरं चिक्षेप कपिकेसरी. ॥ ९९

ये लुला **य** स्य वदनादुद्गता रक्तबिंदवः ।
प्रपेतुस्तेऽनिलोत्क्षिप्ता **मतं**गस्याश्रमे शुचौ. ॥ १००

मुनिरा **ज** स्त्वतिक्रुद्धः शप्तवान्**वा**लिनं प्रभो! ।
तेनात्र न प्रवेष्टव्यं प्रविष्टस्य वधो भवेत्. ॥ १०१

---

१. श्रीः गले यस्य सः । श्रीकंठः शिवः । श्वेतस्य कृष्णसन्निकर्षे शोभाधिक्यात् तत्त्वम्.
२. गजेंद्रेण तुल्याः गजेंद्रप्रतिमाः । नित्यसासः । गजेन्द्रा येवढ्या मोठ्या. ३. नगारा. [स० ११
श्लो० २६ ] ४. भुवि रोहंति ये तान् वृक्षान्. ५. दोन शिंगांच्या योगानें. ६. महिष. पाण्यांत लोळ-
ण्याच्या नैसर्गिक स्वभावामुळें हें नांव पडलें असावें. ७. मया ज्ञातबलोऽसि अतः प्राणान् रक्ष.
[स० ११ श्लो० ३०.] ८. स्त्रीसमूहगतो नाव्हातव्य इति स्मृतिनियमात् एवंविधा दुंदुभेरुक्तिः.
९. हेममाला अस्ति अस्य इति तेन. ही संग्रामजयदा माला महेंद्रानें त्याला दिली होती.
१० सर्ग ११ श्लो० ४७ पहा. ११. गजानां अयुतं तस्य बलं अस्ति यस्य तम्. १२. कपिकेसरी=कपि-
सिंह=कपिश्रेष्ठः.

**वा**लिनो **य**[1] इह स्थाने केचित्स्थास्यंति वानराः ।
बहुवर्षाणि शैलत्वं तेषामपि भविष्यति. ॥ १०२

तं वान **रा** णां वदनात् शापं श्रुत्वा कपीश्वरः ।
ऋष्यमूकमिमं द्रष्टुमपि **राम**! बिभेत्यलम्. ॥ १०३

अतोऽह **म** त्र तिष्ठामि द्विषोऽपगत[2]साध्वसः ।
गिरिकूटनिभः[3] शुष्कः कायस्तस्यैष दृश्यते. ॥ १०४

इमे च **श्री**[4] भृतः शालाः सप्त शाखावलंबिनः[5] ।
यत्रैकं[6] घटते[7] **वा**ली निष्पत्रयितुमोजसा[8]. ॥ १०५

एतद्धि[9] **रा** म! तद्वीर्यं मया सर्वं प्रकाशितम्, ।
कथं तं **वा**लिनं हंतुं समरे शक्ष्यसे नृप!' ॥ १०६

**सु**ग्रीव **म** थ तच्छ्रुत्वा प्रहसं[10]ल्लक्ष्मणोऽब्रवीत्, ।
'कस्मिन्कर्मणि निर्वृत्ते श्रद्दध्या[11] **वा**लिनो वधम्?' ॥ १०७

कपि रा **ज** उवा, 'चांग[12]! सप्त शालानिमान्पुरा[13] ।
एवमेकैकशो **वा**ली पीडयामास चासकृत्. ॥ १०८

एषाम **य** मगं[14] **राम**! एकमेकेषुणा यदि ।
विदारयेद्गतं मन्ये **वा**लिनं शक्तिशालिनम्. ॥ १०९

यत्कास[15] **रा** सुरस्यास्थि पादेनैकेन **लक्ष्मण**! ।
उद्यम्य प्रक्षिपेच्चापि तरसा द्वे धनुःशते.' ॥ ११०

---

१. ये इह (अस्मिन्) स्थाने 'दिवसश्चात्र मर्यादा' असें वा० रामायणांत आहे. वालिपक्षीय वानरांना एक दिवसाचा अवधि दिला होता. आश्रमांत न येण्याचे संबंधाची मर्यादा 'समंतादाश्रमं पूर्णं योजनम्.' २. अपगतं (द्विषः) साध्वसं यस्य सः अपगतसाध्वसः अपेतभीः. ३. गिरिकूटेन तुल्यः गिरिकूटनिभः पर्वतशृङ्गतुल्यः. ४. श्रियं बिभ्रति ये ते । शोभायुक्ताः. ५. शाखांमुळें खालीं लोंबताहेत असे दिसणारे शाखाभिरवलंबिनः. ६. येषाम्. ७. चेष्टते, समर्थो भवति. ८. हें नामधातूच्या 'तुमन्ता'चें रूप आहे. न संति पत्राणि यस्मिन् स निष्पत्रः । निष्पत्रं करोति इति निष्पत्रयति । निष्पत्र+तत्करोत्यर्थे णिच्+तुम् । 'तत्करोतीति णिजपीष्यत इति न्यासे. सि० कौ० पृ०२००. ओजसा=बलेन. ९. हा श्लोक वा० रामायणांत आहे. [स० ११ श्लो० ६८.] १०. सशिरःकम्पं हसन्. ११. विधिलिङ् हें अर्थं वा० रामायणांत आहे. [स० ११ श्लो० ६९.] १२. हे लक्ष्मण. १३. ताडवृक्ष. [सप्ततालीभेदाची कथा किष्किंधाकांडाच्या १२ व्या अध्यायांत आहे. रामानें एका तालवृक्षाचा भेद करावा म्हणून जो बाण टाकिला त्यानें सात सालवृक्षांचा भेद करून ते वृक्ष ज्या भूमीवर होते तिचा भेद करून सप्तभूमि रसातलांत प्रवेश केला असें वर्णन आहे.] १४. न गच्छति इति अगः (वृक्षः). १५. के (जले) आसरति अथवा कु(ईषत्) सरति स्थूलकायत्वात् इति कासरः=महिषः । तरसा=वेगेन । पायाचे आंगठ्यानें तो अस्थिपंजर सहजगत्या योजन लांब फेंकला.

उवाच **म** धुरं रामः, 'प्रत्ययो मे न विक्रमे ।
तर्हि तं समरे श्लाघ्यमहमुत्पादयामि ते.' ॥ १११

उक्त्वैवं **ज** गदीशस्तं दुंदुभेः कायपंजरम् ।
पादांगुष्ठेन चिक्षेप लीलया दशयोजनम्. ॥ ११२

'आर्द्रः का **य** स्तदा शुष्क इदानीं तेन राघव ! ।
नात्र शक्यं बलं ज्ञातुमि'ति कीशाधिपोऽब्रवीत्. ॥ ११३

तच्छ्रुत्वा **ज** गतां नाथः शालानुद्दिश्य सायकम् ।
मुमोचाशु स तान्सप्त भित्त्वा भूमिं च दुर्धरः. ॥ ११४

पाताले **यं** मसात्कृत्वा दानवाञ्शैरधिं पुनः ।
प्रविवेश मुहूर्तेन तद्दृष्ट्वा विस्मितः कपिः. ॥ ११५

प्रणम्य **रा** घवायाह, 'सेंद्रानपि सुराञ्शरैः ।
समर्थस्त्वं रणे हंतुं किं पुनर्वालिनं प्रभो ! ॥ ११६

अरिं त **म** दीयं रणे मत्प्रियार्थं महाभुज ! ।
जहि दाशरथे ! तुभ्यं मया बद्धोऽयमंजलिः' ॥ ११७

तं रामः **श्री** पतिः प्रेम्णा परिष्वज्याब्रवी, 'त्सखे ! ।
इतो गच्छाम किष्किंधां क्षिप्रं गच्छ त्वमग्रतः. ॥ ११८

गत्वा चा **रा** दरातिं तमाव्हय भ्रातृगंधिनम् ।
त्वया समागतं पापं हंताशु मम मार्गणः.' ॥ ११९

तथेति **म** हदास्थाय धैर्यं कीशो गतोऽग्रतः ।
वृक्षैरात्मानमावृत्य रामोऽतिष्ठन्महावने. ॥ १२०

---

१. सर्ग ११ श्लो० ८३ पहा. २. आर्द्रः कायस्तदा इत्यादि, रामाच्या बलाचा चांगला प्रत्यय यावा याकरितां, सुग्रीव म्हणाला असावा, नाहींतर 'तरसा द्वे धनुःशते' या पूर्वीच्या त्याच्या वाक्यावरून त्याजकडे मूर्खपणा येऊं पाहतो. ३. यमाधीनान् कृत्वा 'तदधीनवचने साति:' सि०कौ० पृ०१८२. ४. शराः शेरते अस्मिन् इति शरधिः इषुधिः (भाता). ५. राघवमनुकूलयितुं इंद्रेण सह वर्तमानान्. ६. मम प्रियं कर्तुम्. ७. महांतौ भुजौ यस्य सः । हे दीर्घबाहो ! ८. सर्ग १२ श्लो० ६८ पहा. ९. आरात्=जवळून. न राति ददाति सुखमिति अरातिः (शत्रुः). हें सुप् समासाचें उदाहरण. जेव्हां एकादा समास कोणत्याही मुख्य समासाखालीं घालतां येत नाहीं तेव्हां त्या समासाला साधारणतः सुप् समास नांव देतात. आव्हय=आह्वयस्व । स्पर्द्धायामाङः. सि० कौ० पृ० २७६. १०. भ्रातरं गंधयते (पीडा देतो, द्रोह करतो) इति तम् । अनर्थकभ्रातृव्यपदेशम् (स० १२ श्लो० १३.) हन्ता=मारील. ११. त्याप्रमाणें करतों असें बोलून. आस्थाय अवलंबन करून, आंगीं आणून. १२. झांकून टाकून म्हणजे झाडांच्या आड राहून.

सुग्रीवो **ज** नितोत्साहो बद्ध्वा परिकरं दृढम् ।
वेगेन व्यनदद्धोरं कोपादाहूय **वा**लिनम्. ॥ १२१

समरा **य** समाहूतः क्रोधांधो वानरेश्वरः ।
निष्पपात सुसंरब्धो भास्करोऽस्ततटादिव. ॥ १२२

ततः प **रा** क्रमवतोस्तयोर्भ्रात्रोः सरोषयोः ।
रणोऽभवत्सुतुमुलो बुधांगारकयोरिव. ॥ १२३

दृष्ट्वा स **म** स्वरूपौ तावुभौ देवाविवाश्विनौ ।
नावगच्छत्सुकंठं तं **वा**लिनं वापि **रा**घवः ॥ १२४

ततो नि **ज** मिषुं मोक्तुं बुद्धिं चक्रे न **रा**घवः ।
भग्नः **सु**कंठोऽजानानो नाथं शैलमनुद्रुतः. ॥ १२५

प्राप्ताभ **य** मभिप्रेक्ष्य ऋष्यमूकमगं गतम् ।
'मुक्तो ह्यसि त्वमि'त्युक्त्वा परावृत्तः कपीश्वरः[12]. ॥ १२६

सहानु **ज** स्तं[13]मागच्छ**द्रा**घवोऽमुं[14]मुवाच सः[15] ।
आव्हयस्वेति मामुक्त्वा 'किमिदानीं त्वया कृतम् ?' ॥१२७

**रा**मो व **य** स्यं प्लवगं तमुवाचाभिसांत्वयन्, ।
'श्रूयतां कारणं तात! क्रोधश्च व्यपनीयताम्. ॥ १२८

परस्प[16] **रा** भिन्नरूपस्वरविक्रमवेगयोः ।

---

१. जनितः उत्साहः यस्मिन् सः. २. कमरपट्टा करून, कमर बांधून. ३. स० १२ श्लो० १४-१५ पहा. ४. उत्साहवान् अथवा वेगवान्. ५. 'भास्करोऽस्ततटादतिदूरमप्युदयपर्वतमल्पेन कालेन याति, एवमदृश्यस्थानतया तत्तुल्यगुहातः क्षणेन बहिरागत इत्यर्थः' इति तिलके. [स० १२ श्लो० १६.] ६. बुध व अंगारक (मंगळग्रहाचा वर्ण लाल आहे म्हणून तशी संज्ञा) यांच्या अधिक्रमणाला (transit) उद्देशून आदिकवि श्रीवाल्मीकिमुनींनें लिहिलें असावें। हें अधिक्रमण कोणत्या काळीं झालें ह्याचा निर्णय ज्योतिर्विदांनीं केल्यास हा एक उत्तम शोध होईल। अंगारकाला मंगल हें नांव 'विपरीतलक्षणे'नें पडलें आहे. पुण्यजन–राक्षस, Lucas–a cave, हीं दुसरीं उदाहरणें. ७. सुगलम्–सुग्रीवम्. ८. जेरीस आलेला. ९. राघव आपला रक्षक नाहीं असें जाणून, असाच अर्थ ओढून ताणून काढला पाहिजे। किंवा आपल्या रक्षकाच्या मनांतील भाव काय आहे हें न जाणून, असा दुसरा अर्थ शक्य आहे. १०. अनुद्रुतवान्। गत्यर्थाकर्मकेत्यादिना (सि० कौ० पृ० ३०९) कर्तरि क्तः। उपसर्गवशात् सकर्मकत्वम्। शैलम्–ऋष्यमूकम्. ११. न गच्छति इति अगः पर्वतः, नगः। ज्यावेळीं सुग्रीव ऋष्यमूक पर्वताकडे पळूं लागला तेव्हां वालीनें त्याचा आश्रमाच्या निषिद्धमर्यादेपर्यंत पाठलाग केला व सुग्रीव त्या सीमेच्या आंत गेला हें पाहून वाली परतला. १२. वाली. १३. सुग्रीवम्. १४. राघवम्. १५. सुग्रीवः. १६. परस्परात् भिन्नाः रूपस्वरविक्रमवेगाः ययोस्तौ, तयोः.

साद्दश्यातिशयाद्भ्रात्रोर्व्यक्तिर्वा नोपलक्षिता. ॥ १२९

प्लवं ग **म** पते!ऽत्यंतं साद्दश्यान्मोहितेन वाम् ।
त्वद्धातशंकितेनेषुर्न प्रक्षिप्तः सखे! मया. ॥ १३०

तत्त्वया **श्री** मता भूयो योद्धव्यं तेन **वा**लिना ।
हंताहं तात! तं दृष्ट्वा त्वय्यभिज्ञानमुज्ज्वलम्.' ॥ १३१

उक्त्वैवं **रा** घवः प्राह, 'लक्ष्मणोत्तिष्ठ सत्वरम् ।
प्रफुल्लां नागपुष्पीं त्वं सख्युः कंठे स्वयं कुरु.' ॥ १३२

प्लवंग **म** स्तया कंठे कृतया लतया बभौ, ।
आकाशे शारदश्चंद्रो यथा नक्षत्रमालया. ॥ १३३

**सु**ग्रीवो **ज** यकामस्तां **कि**ष्किंधां प्राप्य **वा**लिनम् ।
आव्हयामास सहसा स्वपुरात्सोऽपि निर्गतः. ॥ १३४

**वा**ली प्र **य** तयोत्सिक्तस्**ता**रया श्रुतवृत्तया ।
निवारितोऽपि निरगार्दपुनर्गतये गृहात्. ॥ १३५

तं संग **रा** य प्रवृत्तं पुनर्वालिनमुद्धतम् ।
हीयमानं च **सु**ग्रीवं दृष्ट्वा श्रितहितः प्रभुः. ॥ १३६

---

१. एकैकविशेषः, भेद. २. तव घातः, तस्मिन् विषये संजाता शंका अस्य इति तेन. ३. 'पुत्रे पितरि पूज्ये च तातशब्दो बुधैः स्मृतः' इति केशवः । अभिज्ञायते अनेन इति अभिज्ञानम्= ओळखण्याचें साधन. ४. पांढऱ्या नागपुष्पीच्या फुलांची माळ । नागाकारं पुष्पं अस्याः सा । नागपुष्पी नांवाच्या लतेचें मराठी प्रचारांतील नांव कोणास माहीत असल्यास कळवावें. या ठिकाणीं मूळांत 'गजपुष्पी' असें लतेचें नांव आहे. [स० १२ श्लो० ३९ पहा.] ५. 'मालयेव बलाकानां ससंध्य इव तोयदः' ही वा० रामायणांतील उपमा वानराच्या वर्णाबद्दल युक्ततर दिसते । शारदः—शरत्कालिकः. ६. पवित्रया । उत्सिक्तः—गर्वितः. ७. श्रुतं वृत्तं यया सा । अंगदाकडून तारेला कळलें होतें कीं सुग्रीवाला रामाचें साहाय्य आहे व समदुःखी असल्यामुळें ते सखे झाले. [वा० रा० किष्किं०स० १५ श्लो० ६-३१.] ह्या तारेच्या उपदेशाचा उल्लेख 'श्रुतवृत्तया' पदानेंच काय तो **मो**रोपंतानें केला आहे । यामुळें **मो**रोपंतानें रामायण वाचीत असतां चुकल्यासारखा कधीं कधीं भास होतो । उदाहरणार्थ मरनवेळच्या वालीच्या भाषणांत त्याला रामाची पूर्वीं माहिती होती असें दिसतें, परंतु ही माहिती असल्याबद्दलचा **मो**रोपंताच्या रामायणांत वा० रामायणाप्रमाणें पूर्वीं उल्लेख केला नाहीं. ८. आतां गेला तो गेलाच, पुनः घरांतून बाहेर पडण्याचा प्रसंगच आला नाहीं । साधारण अशाच अर्थाचा 'अपुनरावृत्तये' हा शब्द आहे. ९. इकडे सुग्रीव तर तेजोहीन दीन झाला आहे, दुसरीकडे वाली हा रणमदोन्मत्त झाला आहे असें पाहून. १०. आश्रितस्य हितः । ताडयामास वालिनम् । विद्धं वक्षो यस्य सः.

बाणेन **म** हता **रा**मस्ताडयामास वक्षसि ।
स विद्धवक्षाः सहसा निपपात धरातले.[१] ॥ १३७

इंद्रध्व[४] **ज** इवोद्धूतो गतसत्त्वो[२] विचेतनः ।
पतितः प्लवगाधीशः प्रभोः परशराहतः. ॥ १३८

सुरना **य** कदत्ता या माला कंठेऽस्य कांचनी ।
सा दधार श्रियं प्राणान्[३]पतितस्यापि **वा**लिनः ॥ १३९

देवैरा **ज** सुतो दृष्ट्वा समीपे सानुजं प्रभुम् ।
गर्हयामास बहुशः पराङ्मुख[५]वधाघतः. ॥ १४०

'कः क्षत्रि **य** कुले जातः श्रुतवान्नष्टसंशयः ।
धर्मलिंगप्रतिच्छन्नः[६] क्रूरं कर्म समाचरेत् ? ॥ १४१

शठः[७] क्रू[८] **रा** चरणवान्मिथ्याप्रश्रित[९]मानसः ।

---

१. सर्ग १६ श्लो० ३५-३६ पहा. २. गतं सत्त्वं बलं यस्य सः । वैर नसतां प्रच्छन्न राहून शरप्रहार केल्याबद्दल वाली जेव्हां रामाला टोंचून बोलला तेव्हां तेव्हां रामानें उत्तर केलें कीं, 'तूं मरण पावलास अशा समजुतीनें तारेचा स्वीकार सुग्रीवानें केला होता. परंतु त्वां तर अन्यायानें त्याची रुमा नांवाची स्त्री हरण केलीस. ती तुला स्नुषेप्रमाणें होती.' 'औरसीं भगिनीं वापि भार्यां वाप्यनुजस्य यः । प्रचरेत नरः कामात् तस्य दण्डो वधः स्मृतः॥' [स० १८ श्लो० २२-२३.] शिवाय माझा सखा सुग्रीव याजपाशीं तुझ्या वधाची मीं प्रतिज्ञा केली होती । 'प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति सुबहून्मृगान् । विद्धयंति विमुखांश्चापि न च दोषोऽत्र विद्यते ॥ तस्मात्त्वं निहतो युद्धे मया बाणेन वानर । अयुध्यन्प्रतियुध्यन्वा यस्माच्छाखामृगो ह्यसि ॥' [स०१८श्लो०३८-४०.] हें ऐकून, वालीनें, दूषण दिल्याबद्दल, क्षमा मागितली । पराङ्मुख वधाचें खरें कारण आम्हांला तर निराळेंच वाटतें । जोंपर्यंत ती संग्रामजयदा कांचनी माला गळ्यांत आहे तोंपर्यंत वालीचा पराजय सन्मुख उभा राहून कोणीही करूं शकत नव्हता । यास्तव खऱ्या वीराला अनुचित असें कार्य, केवळ आपलें कार्य साधण्यासाठीं, रामाला करावें लागलें । उडवाउडवीचें उत्तर देऊन कसें तरी वालीचें समाधान केलें हें उघड दिसतें. ३. त्या मालेच्या प्रभावामुळें कांहीं वेळपर्यंत प्राण राहिले. [स०१७श्लो० ४-६.]४. इंद्रपुत्र=वाली. ५. लढाई करण्याच्या इच्छेनें समोर आला नाहीं अशाच्या वधामुळें होणाऱ्या पातकाच्या संबंधानें. ६. धर्मस्य लिंगं जटावल्कलधरत्वं तेन प्रतिच्छन्नः जटावल्कलादि धर्माच्या चिन्हांनीं ज्याचें खरें रूप झांकलें गेलें आहे असा । धर्मध्वजी । हा श्लोक वा० रामायणांत आहे. [स० १७ श्लो० २७.] ७. गूढविप्रियकृत्. ८. क्रूरं आचरणं तदस्यास्ति इति क्रूराचरणवान् । 'न कर्मधारयात् मत्वर्थीयो बहुव्रीहिः' या नियमानें दूषणीय आहे । कर्मधारय समासाला मत्वर्थीय प्रत्यय लावून बहुव्रीहीच्या अर्थाचा समास करूं नये । याठिकाणीं 'क्रूराचरणः' असें पाहिजे होतें. ९. धर्माचे संबंधानें आपलें अंतःकरण विनीत आहे असें लटकेंच भासविणारा । मिथ्यैव प्रश्रितं मानसं यस्य सः, अजितान्तःकरणः.

कथं दशरथेन त्वं जातः पापो महात्मना? ॥ १४२

सुग्रीव **म** नसः कर्तुं प्रियमेतत्कृतं त्वया ।
स्वदारप्राप्तिकामेन राम! कामपरात्मना. ॥ १४३

रावणं **श्री** मदांधं तं पूर्वं संप्रार्थितो ह्यहम् ।
नैकाहेन किमाहर्ता कंठे बद्ध्वा तवांतिकम्? ॥ १४४

पाराव **रा** प्सु वा न्यस्तां पाताले वापि मैथिलीम् ।
आननेयं तवादेशाद्धयग्रीव इव श्रुतिम्.' ॥ १४५

इत्यादि **म** न्युमान्राममुवाच कुवचः कपिः ।
तमुवाच प्रभु, 'न! त्वं धर्मं जानासि वानर! ॥ १४६

भरतो **ज** गतीपालस्तदाज्ञाकारिणा मया ।
वध्या अधार्मिकाः सर्वे नृपैरन्यैरपि क्षितौ. ॥ १४७

त्वं यवी **य** स उद्वृत्त भार्यायां खलु वर्तसे ।
पुत्रः कनीयान्धर्मेण तद्भार्या च स्नुषा मता. ॥ १४८

भ्रातृदा **रा** पहर्तारं हत्वा त्वां वानराधमम् ।
धर्मस्य रक्षणाल्लोकसंग्रहोऽयं मया कृतः. ॥ १४९

न मेऽत्र **म** नसस्तापश्छन्ना दृश्याश्च भूमिपाः ।
मृगान्हत्वापि निर्दोषास्त्वं च शाखामृगः स्फुटम्.' ॥ १५०

इत्युक्तो **ज** गदीशेन वाल्युवाच, 'रघूत्तम! ।
मया यदुक्तं परुषं तत्क्षमस्व कृपां कुरु. ॥ १५१

मम का **य** जमत्यंतप्रियं तारेयमंगदम् ।
पालयामुं च सुग्रीवं पुत्रवद्बंधुवत्प्रभो! ॥ १५२

रघुग **ज**! मम प्राणप्रियां तारां तपस्विनीम् ।

---

१. स० १७ श्लो० ४२ पहा. २. कामः परं यस्य तद्विधः आत्मा यस्य सः तेन. ३. श्रियां मदस्तेनांधः । एकम् अहः एकाहः द्विगुस० । रात्राह्नाहाः पुमांसः इति नियमात् पुंस्त्वम् । सि० कौ० पृ० ८२. ४. तुझी भार्या हरण करणाऱ्या रावणाला मी एका दिवसांत कोठाने ठिकाणी बांधून तुला आणून दिला नसता काय? [स० १७ श्लो० ५०.] ५. पारं न अस्ति अस्य इति पारावारः । अर्शआदिभ्योऽच्. सि० कौ० पृ० १६९. ६. 'श्वेताश्वतररूपिणा श्रुति मधुकैटभाभ्यां पाताले निगृहीतां यथा हयग्रीवो भुवमानयति स्म तद्वत्.' [स० १७ श्लो० ५१ टीका पहा.] ७. श्रुतिसमुद्धाराची कथा पंताच्या 'अवतारमालें'त आहे. (गीति ५३-५८ पहा.) ८. आपल्या धाकट्या भावाच्या—यवीयसः । कनीयान् भ्राता पुत्रवत् । अनस्तद्भार्या स्नुषा. ९. क्षमायाम्. १०. सर्ग १८ श्लो० १४-१९ पहा. ११. राजानः । भूमिं पान्ति इति । शाखास्थो मृगः (पशुः) शाखामृगो वानरः. १२. तारायाः अपत्यं पुमान् तारेयः. १३. दीनाम् शोच्याम्.

सुग्रीवो नावमन्येत तथा कर्तुं त्वमर्हसि.'[1] ॥ १५३

कौसल्ये[2] **य** स्तमाह, 'त्वं **वा**लिन्! पुण्यां गतिं व्रज।
सुतं ते पालयिष्यावस्तां **ता**रां च शुचं[3] त्यज.' ॥ १५४

तत्र **ता** **रा** ययौ पद्भ्यां रुदती ससुता द्रुतम्।
रामादिभिर्द्रवच्चित्तै[4] स्तस्या विलपितं श्रुतम्. ॥ १५५

कांचनी **म** थ तां मालां **सु**ग्रीवाय ददौ स्वयम्[5]।
'**रा**मस्य कुरु साहाय्यं **ता**रायाश्च वचो हितम्. ॥ १५६

राज्यस्य **श्री** स्त्वां भजतु पाल**यां**गदमात्मजम्[6]।
करिष्यति महत्कर्मे'त्युवाचानुजमानतम्. ॥ १५७

उवाच **रा** जा कीशानामथ तं पुत्र**मं**गदम्,।
'वत्स! त्राता पिता तेऽयं **सु**ग्रीवस्त्वममुं भज.' ॥ १५८

इत्युक्त्वा **म** रण प्राप्तो गतो **वा**ली वरां गतिम्।
**सु**ग्रीवः कर्म[7] तत्कृत्वा पश्चात्तप्तोऽभवद्भृशम्. ॥ १५९

उवाच **ज** गतां नाथ, '**मृ**ष्यमूकमहं गिरिम्।
गंतुमिच्छामि, **कि**ष्किंधा**मं**गदः पालयिष्यति[8]. ॥ १६०

आंजने[9] **य** प्रभृतयो वानरा **रा**म! **जा**नकीम्।
विचिन्वंतु समर्थस्त्वं हंतुं दारापहारिणम्. ॥ १६१

न वान **रा** णां राज्यं मे प्रियं **रा**म! न जीवितम्।
हत्वाग्रजं रुषा जातोऽकीर्तेः[10] शोकस्य भाजनम्.' ॥ १६२

तं शुचं **म** हतीं प्राप्तं **सु**ग्रीवं **रा**घवः प्रभुः।
स्वयमाश्वासयामास मधुराभिर्हितोक्तिभिः. ॥ १६३

सा प्रभं[11] **ज** नपुत्रेण **ता**रा पूर्वप्रबोधिता।

---

१. हें वालीचें भाषण मूळांत फार हृदयद्रावक आहे. [स० १८ श्लो० ४५-५८.] २. कौसल्यायाः अपत्यं पुमान् कौसल्येयः. ३. 'शुच्' या स्त्रीलिंग हलन्तशब्दाचें द्वि० वि० चें रूप। ४. द्रवच्चित्तं येषां तैः। करुणार्द्रचित्तांनीं. ५. वाली. 'इमां च मालां आधत्स्व दिव्यां सुग्रीव! काञ्चनीम्। उदारा श्रीः स्थिता ह्यस्यां संप्रजह्यान्मृते मयि॥' वा० रा० किष्कि० स० २३ श्लो० १६. ६. सुग्रीवाला किष्किंधेचा राजा केला व अंगद लहान असल्यामुळें त्याला युवराज केला। सुग्रीवानंतर राज्य अंगदाला मिळावयाचें होतें. ७. उत्तरक्रियाम्. (स० २६.) ८. 'अंगदः किष्किन्धां पालयिष्यति' असें सुग्रीव वालीच्या मरणामुळें फार वाईट वाटल्यामुळें म्हणाला। हें वा० रामायणांत नाहीं। राज्याभिषेक झाल्यावर सुग्रीव किष्किंधेंतच होता. वा० रा० किष्कि० स० ३१ पहा. ९. अंजनायाः अपत्यं पुमान् आंजनेयः। स प्रभृतिः आदिः येषां ते. १०. जातः अकीर्तेः. ११. वायुपुत्रेण. वा० रा० किष्कि० स० २१.

उवाच रामं शोकार्ता, 'भो! भो! राजीवलोचन! ॥१६४

रघुना य क! मे भर्ता येन संप्रेषितो दिवम् ।
मां च तेनैव बाणेन पत्युः प्रेषय सन्निधिम्. ॥ १६५

मां विना ज लदश्याम! धामधाम वराकृते! ।
रंभोर्वश्याद्यप्सरोभिः स्वर्गेऽपि न स रंस्यते.' ॥ १६६

अप्रमे य दयस्तारामुवाच प्रभुसत्तमः, ।
'शोकं मा कुरु भद्रे! त्वं सुग्रीवान्मुदमाप्स्यसि. ॥ १६७

त्वं यौव रा ज्ये तनयं दृष्ट्वांगदमपि स्थितम् ।
प्रीतिं प्राप्स्यसि कल्याणि! वीरपत्न्यस्यलं शुचा.' ॥ १६८

कुरु त्व म स्य सुग्रीव! प्रेतकार्यमनंतरम्.' ।
इत्युवाच तदा युक्तं सौमित्रिर्मित्रवत्सलः. ॥ १६९

अंगदः श्री मदाज्ञप्तः पितुर्दाहं यथाविधि ।
चकारानंतरं रामं हनूमान्वाक्यमब्रवीत्. ॥ १७०

'राजाधि रा ज! राम! त्वं किष्किंधायां कुरु स्थितिम् ।
अर्चयिष्यति रत्नैस्त्वामभिषिक्तः कपीश्वरः.' ॥ १७१

घनश्या म स्तमाहा'हं चतुर्दश समाः पुरम् ।
ग्रामं वा न प्रवेक्ष्यामि पितुर्निर्देशकारकः. ॥ १७२

कपिरा ज स्त्वयं तस्यां गुहायामभिषिच्यताम्.' ।
सुग्रीवमप्युवाच, 'त्वं वालिनः पुत्रमंगदम् ॥ १७३

मम प्रि य ममुं योग्यं यौवराज्येऽभिषेचय ।
प्रावृष्यस्यां प्रस्त्रवणे स्थास्यामि सहलक्ष्मणः. ॥ १७४

---

१. सर्ग २४ श्लो० ३०-४१ पहा. २. पंतकृत मंत्ररामायण—किष्किंधाकांड—गीति ७२-७६ यांत तारेचा शोक आहे तो अवश्य पहा. ३. धाम्नः तेजसः धाम स्थानम् । रम्—लट्-स्यते । ४. अप्रमेया दया यस्य सः । जयार्णवः. ५. स० २४ श्लो० ४२-४४ पहा. ६. वीरः पतिर्यस्याः सा । नित्यं सपत्न्यादिषु. सि० कौ० पृ० ५१. ७. श्रीमता आज्ञप्तः (आज्ञापितः) । ज्ञप् धातु सेट् असल्याकारणानें 'ज्ञप्त' हें रूप निपातनानें सिद्ध झालें. ८. विधिमनतिक्रम्य यथाविधि । अव्य० समासः । 'यथाविधि' हा पाठ अशुद्ध आहे । न अन्तरं (अवकाशः यस्मिन् कर्मणि यथा तथा) झटिति. ९. चवदा वर्षें पर्यंत [illegible] 'समाः' असा बहुतकरून अनेकवचनी प्रयोग आढळतो. १०. प्रावृष् या स्त्रीलिंगशब्दाची सप्तमी. ११. प्रस्त्रवण हें एका गिरीचें नांव. 'घनकालीं गृह केला रामें प्रस्त्रवण-नाम[illegible]नगराजा' असें मंत्ररामायणांत आहे. [गीति ८०.]

कार्तिके **रा** वणवधे यतस्व सचिवैः सह ।
एष नः समयः सौम्य! प्रविश त्वं स्वमालयम्.' ॥ १७५

इत्युक्ते **म** र्कटाधीशे तस्मिन्राज्यपदे स्थिते ।
आजगाम सह भ्राता **रामः प्रस्रवणं** गिरिम्. ॥ १७६

उवास **जँ** लमुक्काले गुहायां सानुजः प्रभुः ।
अहर्निशं प्रियतमां स्मरंस्तद्विरहाकुलः. ॥ १७७

स्मृत्वा प्रि **य** तमां **रामो** बभूवार्तमना यदा ।
तदा पुनर्लब्धधृतिं तं चकार स **लक्ष्मणः**. ॥ १७८

**रामोऽनु** **ज** मुवाचा, 'हं स्थितोऽस्मि वचने तव ।
**सुग्रीवस्य** नदीनां च प्रसादमनुपालयन्.' ॥ १७९

**आंजने** **य** स्तदोवाच **सुग्रीवं** रतिलंपटम् . ।
'कार्यं चिंतय **रामस्य** स्मृत्वा तेन कृतं प्रियम्.' ॥ १८०

स वान **रा** नशेषांस्तांस्त्वमाज्ञापय **सांगदः** ।
इत्युवाच स वध्यो मे यः पक्षं लंघयिष्यति. ॥ १८१

प्लवंग **म** पतेराज्ञां पुरस्कृत्याशु वानरान् ।
दूतान्प्रस्थापयामास **हनूमानंगद**श्च सः. ॥ १८२

शरदः **श्री** रतीवार्तं यदा चक्रे मनस्तदा ।

---

१. कृत्तिका नक्षत्रेण युक्ता पौर्णमासी कार्तिकी सा अस्मिन् अस्ति इति कार्तिकः । हा शरदृतूचा दुसरा महिना । वर्षाऋतु संपल्यावर येणारा शरत्समयच कोणताही उद्यम करण्यासाठीं योग्य आहे. २. करार, ठराव. ३. सोम इव सोम्यः, सोम्य एव सौम्यः । शाखादित्वात् यः स्वार्थे अण् च । सोमा(चन्द्रा)प्रमाणें आल्हादकारक । हे प्रियदर्शन । हे शाल्या. . जलं मुंचंति ये ते जलमुचः । तेषां कालः (समयः) तस्मिन् जलधरसमये वर्षाकाले इत्यर्थः. (जलधरांचें ऐश्वर्य वर्षाकाळांतच विशेषेकरून दिसतें म्हणून त्याला जलधरांचा काल असें म्हटलें आहे.) ५. या विरहाचें वर्णन पंतांनीं अन्यत्र केलें आहे तें असें:—'कामशराकुल राघव कंदरसदनीं वसे सखेदमना; । दमनाम म्हणे, 'करिशी, कां बाणगणें स्मरा! सखे! दमना. ॥ ८४ ॥ वत्सा! श्रमला आत्मा, हा वर्षाकाल कालसा झाला; । गगनच्युत जलधारा या धरिती कालकूटसाजाला. ॥ ८५ ॥ सप्राणा जनकसुता असेल? मी काय तीस पाहीन? । स्त्री हारवूनि रडतों, ऐसा कोणी नसे त्रपाहीन. ॥ ८६ ॥ नर राय देत असतां, अभाग्य हा मी न पावलों कमला; । कांतेला हारविलों हांसत असतील सर्व लोक मला. ॥ ८७ ॥' [मंत्ररामायण—किष्किंधाकांड—गीति ८४-८७ पहा.] ६. नद्यांचें जल केव्हां स्वच्छ होईल याची वाट पहात तुझ्या वचनावर अवलंबून दिवस लोटले. प्रसादं—सुग्रीवस्य अनुग्रहं नदीनां च नैर्मल्यम्. ७. रतीच्या ठायीं आसक्त झालेल्यास.

उवाच लक्ष्मणं रामो, 'वत्स! मत्तः कपिः श्रिया.॥ १८३

व्रज वी **रा** धुनैव त्वं किष्किंधां ब्रूहि तं कपिम्।
न स संकुचितः पंथा येन वाली हतो गतः. ॥ १८४

वाली स **म** र एकेन शरेणैको हतो मया।
त्वां तु सत्यादतिक्रांतं हनिष्यामि सबांधवम्.'॥ १८५

सुमित्रा **ज** स्तदोवाच, 'हन्मि सत्यच्युतं कपिम्।
यदार्य! कार्यमस्माकं वालिपुत्रः करिष्यति.'॥ १८६

कृपाल **य** स्तं सौमित्रिमुवाच पुरुषोत्तमः,।
'स्मर सख्यं महाबाहो! मैवं त्वं कुरु निश्चयम्.॥ १८७

सामैव **रा** ज्ञि तस्मिंस्त्वं प्रथमं कुरु लक्ष्मण!।
कालोऽतिक्रांत इत्येव ब्रूहीषदपि माप्रियम्.॥ १८८

रूक्षाणि **म** तिमन्मैव ब्रूहि प्रीतिं समीक्ष्य ताम्.'।
इत्यग्रजोक्तः सौमित्रिर्जगाम भवनं कपेः.॥ १८९

रामानु **ज** स्त्वतिक्रुद्धः स भयंकरकार्मुकः।
किष्किंधायाश्चलन्मार्गे त्वरया परया युतः.॥ १९०

ते तं भ **य** परीतांगाः क्षुब्धं दृष्ट्वा प्लवंगमाः।
कालमृत्युयुगांताभं शतशो विप्रदुद्रुवुः.॥ १९१

कीशरा **ज** गृहं प्राप्य भयव्याकुलमानसाः।
क्रोधमागमनं चैव लक्ष्मणस्य न्यवेदयन्.॥ १९२

सचिवा **य** त्नवंतस्ते किष्किंधाद्वाररक्षणे।
कपीनाज्ञापयामासुः सालतालशिलायुधान्.॥ १९३

द्विगुणं **रा** घवः क्रुद्धः कपीन्दृष्ट्वा रणोद्यतान्।

---

१. तो मार्ग अतिविस्तीर्ण आहे। हें अर्ध वा० रामायणांत आहे। [स० ३० श्लो० ८२.] पुढील श्लोकांतेंही उत्तरार्ध वा० रामायणांत आहे. २. यत् आर्य. ३. अंगदः. (स० ३१ श्लो० ४.) ४. कृपायाः आलयः स्थानम्. ५. साम एव। ब्रूहि ईषत् अपि. ६. मा—न. ७. शेवटील शब्द खेरीजकरून हा श्लोक वा० रामायणांत आढळतो. [स० ३१ श्लो० २०.] भयेन परीतानि (व्याप्तानि) अंगानि येषां ते. ८. युगान्ते यः कालमृत्युः तस्येव आभा यस्य तम्। युगाच्या अन्ताचे वेळच्या सर्वसंहारक मृत्यूप्रमाणें ज्याचें तेज आहे अशाला. हा समास 'राजदन्तादि' या आकृतिगणांत घेतला पाहिजे। राजदन्तादिषु परम्। सि० कौ० पृ० ९१. शतशः शेंकडों वाटांनीं. ९. सालाश्च तालाश्च शिलाश्च आयुधानि येषां ते तान्. १०. लक्ष्मणाचा समरांगाचा क्रोध, मर्कटांना लढण्याकरितां तयार पाहून, अधिकच वाढला.

अंगदस्तं समासाद्य विषाद[1]मगम[2]त्परम्. ॥ १९४

तं प्रणा **म** परं प्राह लक्ष्मणो, 'व[3]त्समागतम् ।
सु[4]ग्रीवाय स्थितं द्वा[5]रि निवेद्यागच्छ सत्वरम्. ॥ १९५

स गतः **श्री** मताज्ञसो नत्वा तारां रु[6]मां गु[7]रुम् ।
कथयामास, 'सौमित्रिः क्रुद्ध आगत इत्ययम्.' ॥ १९६

स वान **रा** धिपः सु[8]प्तस्तदुक्तं न विबुद्धवान् ।
यदासीन्मदमत्तश्च मदनेन च मोहितः. ॥ १९७

प्लवंग **म** भटाश्चक्रुर्भीताः किलि[9]किलां समम्. ।
महता तेन शब्देन प्र[10]त्यबुध्यत वानरः. ॥ १९८

रामानु **ज** मतिक्रुद्धमागतं वानरेश्वरः ।
श्रुत्वांगदादभूत्त्रस्तः सोऽपृच्छत्कोपकारणम्. ॥ १९९

[11]आंजने **य** उवाच, 'त्वं प्रमत्तः कपिनायक! ।
प्रवृत्तां शरदं राजन्न [12]जानीषेऽत एव रु[13]ट्. ॥ २००

त्वं तिष्ठ **रा** जन्समये भर्तुर्भार्येव त[14]द्वशे ।
मूर्ध्ना प्रणम्य सौमित्रिं त्वं प्रसादय सत्वरम्.' ॥ २०१

प्लवंग **म** पतिः पुत्रमंगदं क[15]नकांगदम् ।

---

१. ही वेळपर्यंत रामाचे कार्याविषयीं कांहींएक काळजी घेतली नाहीं. म्हणून अंगदाला मोठा विषाद झाला. [स० ३१ श्लो० ३१.] २. अ+गम्+लुङ्+त. ३. 'वत्सम् आगतं' असा पदच्छेद मागील श्लोकाच्या अर्थानुरोधानेंही करतां येत नाहीं हें सुस्पष्ट आहे । यास्तव 'वत्स मा आगतं' असाच पदच्छेद इष्ट दिसतो । 'वत्स' हें पद अतिवात्सल्यद्योतक आहे । त्याचा मूळ अर्थ हृदय (किंवा हृदयांत असलेला प्राण) असा होतो । वसति (प्राणः) अस्मिन् इति वत्सम् हृदयम् । मा=माम्. ४. हे वत्स अंगद मी आलों आहे व द्वारांत उभा आहें असें सुग्रीवाला सांगून सत्वर ये—असें लक्ष्मण म्हणाला. ५. द्वारि हें द्वार या स्त्रीलिंग शब्दाचें सप्तम्यन्त रूप. ६. रुमा हें सुग्रीवाच्या पत्नीचें नांव, तारा ही वालिपत्नी होती. ७. पितृव्यम् सुग्रीवम्. ८. झोंपेच्या गुंगींत असलेला । यत्=यस्मात् कारणात् । मदेन मत्तः. ९. भीति व क्रोध यामुळें केलेला शब्द । समम्=युगपत्, एकदम. १०. जागा झाला. [स० ३१ श्लो० ४१.] ११. सुग्रीवाचा मुख्य मंत्री मारुति आपल्या तर्कानेंच म्हणाला. १२. सर्ग३२श्लो०१३ पहा. १३. भार्या पतीच्या स्वाधीन राहते तसा तूं त्याच्या स्वाधीन रहा. [स० ३२ श्लो० २१.] १४. रुट् ही रुष् शब्दाची प्रथमा वि० । रोष, क्रोध. १५. कनकमयं अंगदं यस्य स तम् । 'कनकांगद' या पदाचें औचित्य एथें कोणत्या रीतीनें आहे हें सांगणें थोडें कठिन वाटतें तथापि सोनें मोतीं पोवळें यांचें पाणी अंगावर पडलें असतां अरिष्टें टळतात अशा समजाला अनुलक्षून, या पदाची योजना केली असावी.

प्रेषयामास सौमित्रिमंतरानेतुमाशु तम्. ॥ २०२

अंगदो जवतो गत्वा नत्वा सौमित्रिमादरात् ।
प्रवेशयामास पुरीमयोध्याधिकसंपदम्. ॥ २०३

कीशा भयप्रांजलयो दूरे तस्थुर्निरायुधाः ।
प्रविष्टे लक्ष्मणे वीरे नोचुः किंचिदधोमुखाः. ॥ २०४

सुग्रीवो जनितत्रासोऽभवच्छ्रुत्वा धनुर्ध्वनिम् ।
तारामुवाच, 'गच्छ त्वं तं स्तुत्वापरुषं कुरु.' ॥ २०५

तारा प्रियसमादिष्टा प्रत्युद्गम्य मदाकुला ।
सांत्वयामास सौमित्रिं सा सुधासारसूक्तिभिः ॥ २०६

दृष्ट्वा तारासमानीतं सौमित्रिं कुपितं भृशम् ।
रुमया सह सुग्रीव उत्तस्थौ कांचनासनात्. ॥ २०७

प्रांजलिं महिलावृंदालिसृतं पुरतः स्थितम् ।
लक्ष्मणः क्रोधरक्ताक्षो मदशोणाक्षमब्रवीत्. ॥ २०८

कृतघ्न! श्रीमदाविष्ट! स्त्रैण! मद्यप! दुर्मते! ।
मिथ्याप्रतिज्ञ! सुग्रीव! रामं त्वं विस्मृतः कथम्. ॥ २०९

---

१. अंतर=आंत, अंदर, Inter. २. जवानें, वेगानें। तृतीयार्थें तसिल्. ३. अयोध्येच्या (संपत्ति)पेक्षां जींत संपत्ति अधिक आहे अशा पुरींत। अयोध्याया अधिका संपद्यस्यां सा ताम्. ४. भयामुळें हात जोडून उभे राहिलेले। अधोगतं मुखं येषां ते अधोमुखाः. ५. सर्ग ३३ श्लो० ३१-३७ पहा. ६. अपगमा रुट् यस्य तम् त्याचा क्रोध जाईल असें कर. ७. प्रियेण (सुग्रीवेण) समादिष्टा. ८. मदाच्या योगानें तारेला विलक्षण शोभा आली असावी। क्रुद्ध झालेल्या पुरुषाशीं बोलण्यासाठीं शालीन स्त्रीच्या ठायीं लागणारें धैर्यही मदाच्या योगानें आलें असावें हा अर्थ मनांत योजून 'मदाकुला' पदाचा प्रयोग उचित दिसतो. ९. सर्ग ३२ श्लो० ४१ पहा. तसेंच श्लो० ५१-५७ पहा. १०. अमृतवर्षाप्रमाणें मधुर अशा वचनांनीं. ११. उठून उभा राहिला. १२, मह्यते (पूज्यते) इति महिला योषित्. १३. मदेन शोणे (आरक्ते) अक्षिणी यस्य स तम्. १४. कृतं हन्ति इति कृतघ्नः। तत्संबुद्धौ हे कृतघ्न. १५. श्रिया मदः तेन आविष्टः. १६. स्त्रियमनुवर्त्मे इति स्त्रैणः. १७. मद्यं पिबति इति मद्यपः। केलेले उपकार न स्मरणाऱ्या, ऐश्वर्यमत्त, स्त्रीलंपट, इत्यादि संबोधनें लक्ष्मणाला किती अनिवार्य कोप आला होता हें दाखवितात १८. विस्मृतः=विस्मृतवान्। येथें क्त आर्ष आहे असें मानावें किंवा 'गत्यर्थाकर्मकेत्यादिना कर्तरि क्तः' या नियमानें सिद्ध करावें. सि० कौ० पृ० ३०९. कारण 'सर्वे गत्यर्था ज्ञानार्थाः प्राप्यर्थाश्च' अशी शिष्टोक्ति आहे. वर सांगितल्याप्रमाणें ज्ञानार्थ धातूंचा गत्यर्थ धातूंत समावेश केला म्हणजे रूप सिद्ध होतें हें सांगायाला नकोच.

गोघ्ने सु **रा** पे चौरे च तथा भग्नव्रते जने ।
निष्कृति[2]र्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः. ॥ २१०

ननु[3] ना **म** कृतार्थेन त्वया **रा**मस्य वानर! ।
**सी**ताया मार्गणे यत्नः कार्य आनृण्य[4]मिच्छता. ॥ २११

कीशरा **ज**! कृते तिष्ठ[5] समये तमये[6] स्मर ।
नो चेत्सद्यः शरैस्तस्य हतो[7] द्रक्ष्यसि **वा**लिनम्.' ॥ २१२

**तारा** श्रे[8] **य** स्करं वाक्यमुवाच विनया[9]न्विता, ।
'कुमार! नैवं वक्तव्यो नायं[10] परुष[11]मर्हति. ॥ २१३

न शठो **रा** जपुत्रायमुपकारं न विस्मृतः[12] ।
राज्यं **रु**मां मां कीर्तिं च प्राप्तो[13] **राम**प्रसादतः. ॥ २१४

सुदुःख **म** नुभूयादौ प्राप्येदं सुखमुत्तमम् ।
प्राप्तकालं[14] न जानीते **वि**श्वा[15]मित्रो यथा मुनिः. ॥ २१५

स **गाधि** **ज** स्तदासक्तो घृताच्यां[16] वत्सरान्दश ।
अहो[17]ऽमन्यत धर्मात्मा, किं पुनर्यः पृथग्जनः[18]? ॥ २१६

अविज्ञा **य** मनोऽस्य त्वं सहसा रोष[19]मुल्बणम् ।
कर्तुं नार्हसि **सौ**मित्रे! मित्रेऽस्मिन्मित्रवत्सल! ॥ २१७

महारा **ज** प्रियार्थं मां **रुमामंग**दमप्ययम् ।
राज्यं प्राणांश्च **सु**ग्रीवस्त्यजेदिति मतिर्मम. ॥ २१८

---

१. गां हन्ति इति तस्मिन् (विषये सप्तमी।) सुरां पिबति तस्मिन्. २. पापांतून उद्धरण्याचा मार्ग । विहिता=सांगून ठेवला आहे. ३. भोः, हे । नाम=खरोखर । कृतार्थेन=ज्याची कार्यसिद्धि झाली अशा. ४. न ऋणमस्यास्तीति अनृणः । तस्य भावः आनृण्यम् । उपकाराच्या ऋणापासून सुटका. ५. अन्योन्यकार्यसंपादनाविषयीं केलेला निश्चय पाळ. ६. तम्+अये=कृतं समयम् अये (हे वानर) स्मर. ७. हतः सन् पितृलोके वालिनं द्रक्ष्यसि । लक्ष्मण सुग्रीवाला सुचवीत आहे कीं अतिप्रबल असा असतांही वीर वाली पितृलोकीं गेला त्याच्या उदाहरणावरून तरी आतां शहाणा हो. ८. श्रेयः करोति श्रेयस्करं हितावहम् कल्याणहेतुकम्. ९. विनीता हे कुमार लक्ष्मण. १०. अयं सुग्रीवः. ११. निष्ठुर वचन. १२. विस्मृतवान्. १३. प्राप्तः=प्राप्तवान् विस्मृतः=विस्मृतवान् सर्वे गत्यर्थाः प्राप्त्यर्थाः ज्ञानार्थाश्च गत्यर्थाकर्मकेत्यादिना कर्तरि च क्तः. सि० कौ० पृ० ३०९. १४. 'प्राप्तं कालं' अशीं पृथक् पदें अर्थाकरितां पाहिजेत. १५. विश्वं मित्रं यस्य सः 'मित्रे चर्षौ' सि० कौ०पृ० १०४ या नियमानें 'विश्वा' असें झालें. १६. घृताची ही मुख्य अप्सरांपैकीं एक होती. १७. 'अह' ही अहन् शब्दाची द्वितीया. दहा वर्षे एका दिवसाप्रमाणें गेलीं. १८. पामर, सामान्य जन. १९. उल्बणं कर्तुं=व्यक्तं कर्तुं=प्रदर्शयितुम्.

रामं प्रि **य** तमायुक्तं[1] हत्वा तं राक्षसाधमम् ।
करिष्यत्येव न[2] चिरादत्र मे नास्ति संशयः. ॥ २१९

लंकायां **रा** क्षसानां तु राजपुत्र! श्रुतानि मे ।
शतकोटिसहस्राणि[3] तथा षडयुतानि च. ॥ २२०

नरोत्त **म**! तथा त्रिंशत्सहस्राणि शतानि च ।
एवमाख्यातवान्[4] वाली सह्यभिज्ञो हरीश्वरः ॥ २२१

कपीनां **श्री** मतानेन तथर्क्षाणां[5] च राघव! ।
कोटीरनेका आनेतुं दूताः संप्रेषिताः प्रभो! ॥ २२२

तान्वान **रा** न्महावीर्यानृक्षांश्चामितविक्रमान् ।
प्रतीक्षमाणोऽयं वीर! न निर्याति हरीश्वरः ॥ २२३

अद्य त्वा **म** मिता ऋक्षा गोलांगूलाश्च सत्तम! ।
उपयास्यंति सिद्ध्यर्थं, जहि कोपमरिंदम! ॥ २२४

प्रीत्या भ **ज** स्व सुग्रीवं भजमानं महाभुज!' ।
इति तारावचः श्रुत्वा प्रसन्नो लक्ष्मणोऽभवत्. ॥ २२५

तं सखा **य** मुवाचाथो[6] सुग्रीवो मधुरं वचः ।
'सीतां प्राप्स्यति रामस्तं रावणं च वधिष्यति[7]. ॥ २२६

---

१. प्रियतमया (सीतया) युक्तम्. २. 'नचिरात्' असें समस्तपद पाहिजे. कारण येथें विधीला प्राधान्य आहे, निषेधाला नाहीं । 'प्राधान्यं हि विधेर्यत्र प्रतिषेधेऽप्रधानता । पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥' विश्वनाथकविराजकृत 'साहित्यदर्पण'–उल्लास ७, कारिका ५७४, तींतील 'अविमृष्टविधेयांशभाव' इत्यादि वाक्यावरील वृत्ति पहा. ३. वा० रामायणांतील राक्षसांच्या संख्येशीं मोरोपंतांच्या रामायणांतील संख्येचा मेळ पडत नाहीं । संख्येंत असें अंतर पडण्याचें कारण एवढेंच कीं वा० रामायणांत जो एक श्लोक आहे त्याचे स्मृतिदोषामुळें दोन तुकडे झाले व ही विसंवादिता आली । तो श्लोक असाः–'शतकोटिसहस्राणि लङ्कायां किल रक्षसाम् । अयुतानि च षट्त्रिंशत् सहस्राणि शतानि च ॥ टीका–दशकोटिः समुद्रः शतकोटिमध्यं मध्यानां सहस्रं तथा षष्टि सहस्राधिकत्रिलक्षाणि । तदुपरि षट्त्रिंशत्सहस्राणि । तदुपरि तावन्ति शतानीत्यर्थः. [स० ३५ श्लो० १५ टीका पहा.] ४. हें अर्ध वा० रामायणांत आहे । अभिज्ञः=सुज्ञ शहाणा. ५. तथा+ऋक्षाणाम् । कोटि किंवा कोटी अशीं दोन रूपें या शब्दांचीं आहेत. ६. 'उवाच मधुरं वचः' या वाक्यांत अधिकपदता हा दोष येऊं शकत नाहीं, कारण 'क्वचित्तु विशेषणदानार्थं तत्प्रयोगो युज्यते एव' । यथा 'उवाच मधुरां वाचमिति' असें साहित्यदर्पणकार म्हणतात. ७. वधिष्यति=हनिष्यति. या प्रकारचे सर्व प्रयोग व्याकरणदृष्ट्या चुकीचे आहेत हें वारंवार सांगायाला नको. मागें व्याकरणाचा नियम दिला आहे.

| | | | |
|---|---|---|---|
| कः शक्तो | **रा** | ज सिंहस्य [1]ख्यातस्य स्वेन कर्मणा । | |
| | | तादृशं प्रतिकुर्वीत लेशेनापि[2] नृपात्मज! ॥ | २२७ |
| येन प्र | **म** | थितो **वा**ली बाणेनैकेन लीलया । | |
| | | [3]**मा**हेश्वरं धनुर्भग्नं सहायैस्तस्य किं प्रभोः? ॥ | २२८ |
| [4]राजरा | **ज** | स्य व्रजतो हंतुं तं **रा**वणं रणे । | |
| | | [5]अनुयात्रां करिष्यामि दासोऽहं वानरैः सह. ॥ | २२९ |
| **सौ**मित्रे! | **य** | [6]दतिक्रांतं किंचिद्वि[7]श्वासतः प्रभोः । | |
| | | [8]प्रेष्यस्य मे तत्क्षंतव्यं न [9]कश्चिन्नापराध्यति.' ॥ | २३० |
| कपिरा | **ज** | स्य वाक्येन प्रीतः **सौ**मित्रिरब्रवीत्, । | |
| | | 'त्वया नाथेन मे भ्राता [10]सनाथः सर्वथा सखे! ॥ | २३१ |
| योग्यः श्रि[11] | **य** | मिमां भोक्तुं त्वं **सु**ग्रीव! कपीश्वर! । | |
| | | [12]वक्तैवं **रा**मतस्त्वत्तः कोऽन्यः सत्यतुले बले? ॥ | २३२ |
| [13]संदेशो | **रा** | घवेण त्वं विक्रमेण बलेन च । | |
| | | सहायो दैवतैर्दत्तश्चिराय कपिपुंगव! ॥ | २३३ |
| किंतु त्व | **म** | द्यैव सखे! निष्क्र[14]म्येतो मया सह । | |
| | | सांत्वयस्व [15]वयस्यं तं भार्याहरणदुःखितम्. ॥ | २३४ |
| शोचतः | **श्री** | मतः श्रुत्वा विलापं भृशदुःसहम् । | |
| | | यन्मया परुषाण्युक्तस्तत्क्षमस्व सखे! मम.' ॥ | २३५ |
| तच्छ्रुत्वा | **रा**[16] | घववचः **सु**ग्रीवो हृष्टमानसः । | |
| | | उवाच **मा**रुतिं, 'दूतान्पुनः प्रेरय शीघ्रगान्. ॥ | २३६ |
| स्थिता हि | **म** | गिरौ कीशाः **कै**लासे **मं**दरे तथा । | |
| | | **म**हेंद्र**विं**ध्ययोर्येऽन्ये **मे**[17]रुपार्श्वगता अपि. ॥ | २३७ |

---

१. धनुर्भङ्गवालिवधादिना ख्यातस्य. २. तज्जनितोपकारसदृशम्. लेशेन=अंशेन. ३. शैवं किं प्रयोजनम् इति काकुः, न किमपि प्रयोजनमित्यर्थः. ४. राज्ञामपि राजा राजेश्वरः रामः. ५. अनुगमनम्. ६. अपराध केला असेल. ७. राम क्रूर नाहीं, शत्रु नाहीं असा विश्वास असल्यामुळें. ८. सेवकस्य. ९. कारण कधीं चुकी करणार नाहीं असा दासच संभवत नाहीं 'संभाव्यनिषेधनिवर्तकौ द्वौ प्रतिषेधौ प्रकृतार्थं गमयतः.' १०. कृतार्थः. ११. कपिराजस्य श्रियम्. १२. वक्ता एवं. राम+तसिल् पञ्चम्यर्थे त्वत+तसिल् पञ्च० । सति अतुले बले. १३. बहुतेक असाच श्लोक वा० रामायणांत आहे. [स० ३६ श्लो० १८.] १४. इतः=अस्मात् स्थलात. भार्याया हरणेन दुःखितम्. १५. रामम्. (स० ३६ श्लो० १९.) १६. लक्ष्मणवचः। पूर्वी गेलेल्या वानरांना त्वरा करण्याची सूचना देण्यासाठीं पुनः वानर पाठविले. प्र+ईर+णिच्+लोट्. १७. सर्ग ३७ श्लो० २-६ पहा. मेरुपर्वताच्या बाजूस राहणारे (वानर).

वमंल्यं **ज** नगोत्रे च येऽस्ताद्रावुदयाचले ।
पृथिवीवर्तिनः सर्वान्महाबलपराक्रमान् ॥ २३८

इहौन **य** स्व तान्प्राप्तानहोभिर्दशभिस्तु ये ।
हंतव्यास्ते दुरात्मानो राजशासनदूषकाः.' ॥ २३९

म समी **रा** त्मजो दूतान्कोटिशः प्राहिणोद् द्रुतम् ।
पूर्वं गतैः समाहूता आययुः कपिकोटयः. ॥ २४०

कीशा हि **म** वति प्राज्यं माहेश्वरसवान्नजम् ।
मूलं फलं च जगृहुर्मासतृप्तिप्रदायकम्. ॥ २४१

वानरा **जं** वनास्तस्मिन्मुहूर्ते बहुकोटयः ।
आगताः सर्वतो हृष्टाः सुग्रीवं प्लवगेश्वरम्. ॥ २४२

यदुपा **यं** नमानीतं दिव्यं मूलं फलं मुदा ।
सुग्रीवायार्पयामासुर्नमश्चक्रुः कृपार्थिनः ॥ २४३

रामानु **ज** स्तदोवाच, 'प्लवगेंद्र! मया सह ।
निर्गच्छ राघवं द्रष्टुं यदि ते सौम्य! रोचते.' ॥ २४४

कपिना **य** क आहा'र्य! 'स्थेयं त्वच्छासने मया.' ।
इत्युक्त्वा तेन ताराद्याः प्रेयस्यस्ता विसर्जिताः. ॥ २४५

आरोह्य **रा** घवं पूर्वं शिविकायां कपीश्वरः ।
स्नेहहर्षोत्सवैर्युक्तः स्वयमारुह्य निर्ययौ. ॥ २४६

---

१. अञ्जनपर्वतावर. गाम् त्रायते इति गोत्र. २. आनायय=आणीव. ३. 'नागच्छंति ममाज्ञया' इति शेषपूरणम्. [स० ३७ श्लो० १२.] दहा दिवसांचे आंत हजर होण्याविषयीं सर्व वानरांस सुग्रीवाचा हुकूम होता व जे राजाज्ञा भंग करतील त्यांस शिक्षा होईल असेंही कळविलें होतें. ४. राजशासनाचें उल्लंघन करणारे. ५. समीर+आत्मज+वायुपुत्रः. ६. प्र+अ+हि (स्वादिगणीय धातु परस्मै०)+लङ् त. पाठविले. ७. पुष्कळ माहेश्वर+सव+अन्नजम्=महेश्वराला उद्देशून केलेला जो यज्ञ त्यांतील होमद्रव्यांचें रूपांतर होऊन त्यांची फळें मुळें झालीं. त्या फलादिकांच्या योगें एक महिन्याची तृप्ति होत असे. 'यः कश्चित् सकृदश्नाति मासं भवति तर्पितः' महेश्वरो देवता यस्य स सवः (यज्ञः) तस्मिन् (हुतं अन्नं होमद्रव्यजातं) तस्मात् जातम्. [स० ३७ श्लो० २७-३०]. ८. मासं या तृप्तिः सा मासतृप्तिः द्वि० तत्पुरुष ताम् प्रददाति इति यत. ९. फार जलद चालणारे. सुग्रीवं प्रति. १०. उपहार, भेट. राजादिकांची भेट घेण्याचे वेळीं जे पुढें ठेवतात तें असा त्या शब्दाचा अर्थ होतो. दर्शनकाले उपानीयते यत् तत्. 'रिक्तपाणिर्न पश्येत्[illegible] राजानं देवतां गुरुम्.' ११. तुभ्यम्. १२. सर्ग ३८ श्लो० ४ पहा. १३. आह आर्य. १४. [illegible] स्थातव्यमित्यर्थः १५. तारा आद्या यासां ताः. 'प्रेयस्यः' हें 'प्रेयसी'शब्दाचें प्रथमा[illegible] अनेकवचन. १६. आरोहण करवून, आ–रुह–णिच्–ल्यप्. १७. प्रीति, इष्टप्राप्तिमुळें होणा[illegible] सुख, आनंद यांहीं युक्त.

नरोत्त[1] **म** स्थितेर्देशं प्राप्य यानात्सलक्ष्मणः ।
अवतीर्य[2] पपाताथ स मूर्ध्ना पादयोः प्रभोः. ॥ २४७

रामेण **श्री** मता प्रेम्णा दृढमालिंगितः सखा ।
सांत्वितश्च यथान्यायं बोधितः संस्तुतो भृशम्. ॥ २४८

आगता **रा**[3] ज्ञ आज्ञातः कपयो न पयोधराः ।
यथातथा रजोव्रातैः कुर्वतो दुर्दिनं तदा. ॥ २४९

कपीनां **म** हतां सेनां[4] असंख्याः सिंधुसन्निभाः ।
समागतास्ताः संप्रेक्ष्य हृष्टो रामः सलक्ष्मणः. ॥ २५०

सुग्रीवो **ज** गतां नाथमुवाचैतत्समागतम् ।
'त्वत्सैन्यं[5] त्वद्वशे युक्तमाज्ञापयितुमर्हसि.' ॥ २५१

तं सखा **य** मतिप्रेम्णा परिष्वज्याब्रवीत्प्रभुः, ।
'ज्ञायतां सौम्य! वैदेही[6] यदि जीवति वा न वा. ॥ २५२

देशश्च **रा** वणस्यादौ ज्ञेयः, कार्येऽत्र लक्ष्मणः[7] ।
नैव, नैवाहमप्यद्य त्वमेवाज्ञाकरः प्रभुः.' ॥ २५३

प्लवंग **म** पतिः श्रुत्वा प्रभूक्तं मुदितस्ततः ।
विनतं[8] प्रेषयामास दिशं पूर्वां महाबलम्. ॥ २५४

'तनया **ज** नकस्येष्टा रावणश्च दुराशयः ।
मार्गितव्यो वसन्मासादूर्ध्वं वध्यो[9] भवेन्मम.' ॥ २५५

---

१. नरेषु उत्तमस्तस्य रामस्य स्थितेः निवासस्थानस्य प्रदेशम्. 'नरोत्तम' या समासाचा वर दिल्याप्रमाणेंच विग्रह केला पाहिजे, 'नराणां उत्तमः' असा षष्ठीसमास होऊं शकत नाहीं. कारण 'न निर्धारणे' (सि० कौ० पृ० ७१) या नियमानें तसें करण्याला प्रत्यवाय आहे. २. सर्ग ३८ श्लो० १६-१८ पहा. ३. सुग्रीवाच्या आज्ञेनें कपि आले नाहींत, तर पयोधरच आले, कारण रजःपटलानें मेघपटलवत् आकाश आच्छादित केल्यामुळें सूर्य लोपला. ज्यादिवशीं मेघांच्या योगानें आकाश व्यापून जातें व सूर्य त्यामुळें दिसेनासा होतो त्या दिवसाला 'दुर्दिन' म्हणतात. 'तद्दिनं दुर्दिनं मन्ये यत्र मित्रागमो नहि । तद्दिनं दुर्दिनं मन्ये यत्र मित्रागमो नहि' ॥ 'घनान्धकारे वृष्टौ च दुर्दिनं कवयो विदुः' इति सांजः । हे सुभाषित श्लोक दुर्दिन शब्दाचा अर्थ ध्यानांत ठेवण्याकरितां उत्तम आहेत. रजस्+व्रात=रजः+समूह=धूलिपटल. ४. 'सेनाः' हें द्वितीया अनेकवचन. सिंधुतुल्याः=सिंधूप्रमाणें अमर्याद किंवा अपार. ५. न मन्नियोज्यनामर्हतीत्यभिप्रायः. ६. सर्ग ४० श्लो० ८ पहा. ७. अत्र कार्ये न लक्ष्मणः प्रभुः । अहमपि प्रभुः न । [स० ४० श्लो० १३]. ८. 'विनत' हें एका वानराधिपाचें नांव. त्याच्या बरोबर कांहीं वानरसेना देऊन त्याला पूर्वेला पाठविला. [स० ४० श्लो० १६.] ९. महिना भरतांच माघारें फिरावें, महिना भरल्यावर पुढें राहूं नये, जो कोणी राहील तो वध पावेल. [स० ४० श्लो० ६९, ७०.]

एवं ना . **य** क आज्ञाप्य विनतं तं तथांगदम् ।
जांबवंतं हनूमंतं मैंदं च द्विविदं कपिम्, ॥ २५६

नीलं गै **ज** मथान्यांश्च दक्षिणां दिशमीश्वरः ।
कृत्वावधिं मासमाशु प्रेषयामास सिद्धये ॥ २५७

तारोद **य** करं कीशं सुषेणं वीर्यसागरम् ।
यूथपं बुद्धिसंपन्नं प्रतीचीमादिशद्दिशम्. ॥ २५८

स वान **रा** धिपः प्राह ततः शतवलं कपिम्, ।
'त्वमुदीचीं दिशं गत्वा तत्रान्वेषय जानकीम्.' ॥ २५९

सुग्रीवं **म** रुतः पुत्रे दृष्ट्वा विश्वस्तमानसम् ।
अंगुलीयमभिज्ञानं रामस्तस्मै ददौ निजम्. ॥ २६०

सीतायाः **श्री** मता कीशाः प्रेरिताः परिमार्गणे ।
गताः स्वां स्वां दिशं सर्वे महोत्साहाः सहस्रशः. ॥ २६१

सुग्रीवं **रा** घवोऽपृच्छ,'त्सखे! कथय तत्त्वतः ।
कथं भवान्विजानीते सकलं मंडलं भुवः?' ॥ २६२

प्लवंग **म** पतिः प्राह वालिनाहमनुद्रुतः ।
तदा ससचिवो धावन्दृष्टवान्मंडलं भुवः.' ॥ २६३

वातात्म **ज** मुख्या वीराः सांगदाः सर्वतो दिशम् ।
अन्वेषमाणा ददृशुर्न ते तां जनकात्मजाम्. ॥ २६४

महाका **य** मथारण्येऽसुरं वालिसुतोऽङ्गदः ।
रावणोऽयमिति ज्ञात्वा व्यसुं चक्रे तलेन तम्. ॥ २६५

ते वान **रा** बिलं किंचिद्ददृशुः क्षुत्तृडर्दिताः ।

---

१. अंगदादिकांला दक्षिणेकडे पाठविलें. २. नील=अग्निसुत. (सर्ग ४१ श्लो० २-६). ३. 'गज' हेंही एका अधिपाचें नांव. ४. नागाया उदयं (जन्म देऊन इहलोकीं प्रादुर्भाव करणें) करोतीति तम. सुषेण हा तारेचा जनक होता हाच वालीचा सासरा. ५. पश्चिमेला. ६. हें एका यूथपाचें नांव. (स० ४५ श्लो० ५७.) (उदीचीम्.=उत्तरेकडे.) ७. आंगठी (हें ओळख पटविण्याचें साधन) विश्वासार्ह जो मारुति याजपाशीं दिली. (स० ४४ श्लो० १२.) ८. सर्ग ४५ श्लो० ९ पहा ९. हे अर्ध रामायणांत आहे. [स० ४६ श्लो० १.] १०. विगता असवो यस्य तं गतप्राणम्. चपेट, चपराक मारून=तलेन. (स० ४८ श्लो० १९-२०.) ११. ऋक्ष-बिल नांवाचें गिरिदुर्गाला. या बिलांत मय नांवाचा जो असुरांचा विश्वकर्मा त्यानें हेमा नांवाच्या अप्सरेसाठीं हें ऋक्षबिलनामक उत्तम स्थल मायेनें निर्माण केलें होतें. त्याला इंद्रानें मारल्यानंतर हेमा अप्सरेला इंद्रलोकास जावें लागलें. तिनें त्या रम्य स्थलाचें रक्षणाकरितां स्वयंप्रभा नांवाची दिव्य स्त्री ठेविली होती. तिच्याशीं या बिलांत अंगदादिकांची भेट झाली.

निशाचरा नि **ज** घ्नुस्ते शस्त्रैरुग्रैः प्लवंगमान् ।
तान्नृक्षा वानराश्चापि ग्रावभिः[1] शिखरैरगैः[2]. ॥ ७३८

स संप्रहारो[3] **य** स्तेन तेषां वानररक्षसाम् ।
बभूव तुमुलोऽन्योन्यं क्रुद्धानामभिनिघ्नताम्. ॥ ७३९

उत्तस्थौ सं[4] दु **रा** धर्षो विषण्णे निहते बले ।
आरुरोह रथं भीममसमाप्तक्रियो रुषा. ॥ ७४०

**मा**रुतिस्तत्र **म** हता पादपेन महाबलः ।
रक्षसां कदनं चक्रे तं जघ्ने **रा**वणिः शरैः ॥ ७४१

**बि**भीषणेन **श्री** मान्स भ्राता **रा**मस्य **ल**क्ष्मणः ।
जहि **रा**वणिमित्युक्तो दर्शयित्वा रणोद्यतम्. ॥ ७४२

स **रा**वणिर **रा** तेस्तं पितृव्यं[5] पक्षमाश्रितम्[6] ।
गर्हयामास बव्हीभिर्दुर्वृत्तः परुषोक्तिभिः. ॥ ७४३

**बि**भीषणोऽपि **म** तिमांस्तमुवाचाग्रजात्मजम्, ।
'दीप्तालय[7] इव त्यक्तः पिता ते दोषवान्मया. ॥ ७४४

पापस्त्वं मनु **ज** श्रेष्ठांल्लक्ष्मणान्न विमोक्ष्यसे ।
नेयमस्ति पुरी **लं**का न च त्वं न च ते पिता.॥७४५

मानी दुराश **य** श्चासि बालो विनयवर्जितः ।
बद्धस्त्वं कालपाशेन ब्रूहि मां यद्यदिच्छसि.' ॥ ७४६

तस्य **सौ**मित्रि **रा** रुह्य स्कंधं सूनोर्नभस्वतः[8] ।
चकार युद्धं तुमुलं तदा **रा**वणिना सह. ॥ ७४७

**बि**भीषणेन **म** थिता गदया तस्य वाजिनः ।

---

होण्यापूर्वीच ब्रह्मदेवाच्या वरदानाप्रमाणें अटीप्रमाणें यज्ञविध्वंस करण्याकरितां बिभीषण ल- क्ष्मणाला घेऊन गेला.

१. ग्रावन् (पाषाण) या शब्दाचें तृतीयानेकवचन. २. अगैः=वृक्षैः. ३. युद्धम्. ४. इंद्रजित्. ५. पितुर्भ्रातरम्. ६. गत्यर्थाकर्मकेत्यादिना कर्तरि क्तः ३।४।७२. शत्रुपक्षाचा अवलंब क- रून पुतण्याचा द्रोह केल्याबद्दल इंद्रजित् बिभीषणाला जें कांहीं बोलला तें वाचण्यासारखें आहे. ज्या वटवृक्षावरील भूतगणाला बलि देऊन इंद्रजित् अदृश्य होत असे, त्या वृक्षाजवळ लक्ष्मणाला उभा केला त्यामुळें इंद्रजिताला या प्रसंगीं अदृश्य होऊन लढतां आलें नाहीं. वा० रा० युद्ध० स० ८७ श्लो० ३-१७. ७. पेटलेल्या अग्नीप्रमाणें. ८. नभोऽस्त्यस्याश्रयत्वेनेति नभस्वान् (वायुः) तस्य.

तत्सारथेः शिरः कायात्पातयामास लक्ष्मणः. ॥ ७४८

तमाह 'मनु **ज** त्वं न क्षमः स्थातुं ममाग्रतः ।
त्वामहं प्रेषयिष्यामि नचिराद्यमसादनम्.' ॥ ७४९

लक्ष्मणोऽविन[1] **य** क्रौर्यमायाधर्मवशंवदम् ।
उवाच रावणिं, 'युद्धं कुरु त्वं किं विकत्थसे[2]? ॥ ७५०

मां जेतुं कोऽपि **ज** गति क्षमो नास्ति निशाचर! ।
वाचा व्याहृत्य जानीषे कृतार्थोऽस्मीति दुर्मते! ॥ ७५१

अंतर्हितेन **य** स्तुच्छ[3]! भवताचरितस्तदा ।
तस्कराचरितो मार्गो नैष वीरनिषेवितः. ॥ ७५२

पुरतस्तेऽस्म्य **रा** तेऽहं स्थितो मार्गणगोचरे[4] ।
दर्शयस्वाद्य तत्तेजो वाचा किं त्वं विकत्थसे?' ॥ ७५३

इत्युक्तः सोऽत्य **म** र्षेण रावणिः समितिंजयः[5] ।
युद्धं चकार तुमुलं तेन सौमित्रिणा सह. ॥ ७५४

भग्ने शतांगे[6] **श्री** मान्स लंकां गत्वा नवं रथम् ।
समास्थायाभ्ययात्तूर्णं परैरनुपलक्षितः. ॥ ७५५

रक्षोवलं श **रा** सारैः प्रममर्द बिभीषणः ।
चतुर्भिः सचिवैः सार्धं मारुतिश्च द्रुमोपलैः. ॥ ७५६

शस्त्रैरस्त्रैः स **म** र्थस्तं युद्धं कृत्वा स लक्ष्मणः ।
ऐंद्रास्त्रेण जघानाजाविंद्रशत्रुं महाबलम्. ॥ ७५७

कृते शिरोंबु[7] **ज** च्छेदे रावणेरमराधिपः ।
मुमुदे सह लोकेशैर्नेदुर्दुंदुभयो दिवि[8]. ॥ ७५८

पुष्पवृष्टिर्वि **यं** त्संस्थैः[9] कृता लक्ष्मणमूर्धनि ।
अप्सरा ननृतुर्मुख्या गंधर्वा ललितं[10] जगुः. ॥ ७५९

---

१. अविनयश्च क्रौर्यं च माया च अधर्मश्च ते, तेषां वशंवदं (अधीनम्). २. बोलून. ३. अंतर्हि[त] होऊन लढाई करीत असे म्हणून तुच्छ (क्षुद्र) हें संबोधन योजलें आहे. ४. बाणपथे । बाणा[ं]च्या आटोक्यांत. [स० ८८ श्लो० १२-१६.] ५. लढाया मारणारा. ६. रथे । ज्या वेळीं रथाच[ा] भंग झाला त्या वेळीं इंद्रजितानें जिकडे तिकडे अंधार मंत्रबलानें केला व राक्षसवीरांना[ं] लढत राहावयाला सांगून आपण लंकेंत जाऊन रथ घेऊन आला. ७. शिरकमलाचा छेद [के]ला असतां. ८. सर्ग ९० श्लो० ७३-७६ पहा. ९. वियति संस्था येषां तैः । आकाशस्थैः. १०. [illegible] मधुरम्.

पादार्पितशि **रा** भ्राता **रा**मेणालिंगितो मुदा ।
बिभीषणेनेंद्रजितो वधस्तस्मै निवेदितः. ॥ ७६०

मूर्ध्न्युपाघ्राय **म** र्माणि व्रणितानि पैराशुगैः ।
पस्पर्श सदयं साश्रु श्री**रा**मो भक्तवत्सलः. ॥ ७६१

अंकमारोप्य **ज** नकः प्रियं पुत्रमिवानुजम् ।
रामोऽब्रवी'दहोरात्रैस्त्रिभिः कृच्छ्राद्धतो रिपुः. ॥ ७६२

निरैमित्रोऽहं **य** शस्वी कृतोऽस्म्यद्य त्वया ध्रुवम् ।
त्वैया नाथेन दुष्प्रापे सीता भूश्च न लक्ष्मण !'॥७६३

इत्युक्त्वा मनु **ज** श्रेष्ठः सुषेणं हरिमब्रवीत्, ।
'विशल्यः क्रियतां क्षिप्रं सौमित्रिर्मित्रवत्सल!' ॥ ७६४

एवमुक्तः प्र **य** तेन स पैटुर्हरियूथपः ।
लक्ष्मणाय ददौ नैस्तः सुषेणः परमौषधम्. ॥ ७६५

गंधमाघ्राय **रा** जीवलोचनस्तस्य तत्क्षणम् ।
निर्वेदनो विशैल्यश्च समपद्यत लक्ष्मणः. ॥ ७६६

ते च प्लवंग **म** श्रेष्ठाः सामात्यश्च बिभीषणः ।
कृता विशल्या मुदिताः सुषेणेन महात्मना. ॥ ७६७

रामोऽतिहृष्टः **श्री** दस्य भ्राता शोकाकुलोऽभवत् ।
सीतां हंतुं प्रगृह्यासिमशोकवनिकां ययौ. ॥ ७६८

सीता दृष्ट्वा खै **रा** सिं तं भीता सस्मार राघवम् ।
आर्यां शुशोच कौसल्यां मंथरां च निनिंद सा. ७६९

सुपार्श्वो नाम **म** तिमानमात्यः शीलवांस्तदा ।
वारयामास तं सीतावधात्सूक्तिशतैर्मतैः. ॥ ७७०

ततो ज्येष्ठात्म **ज** स्यातिशोकव्याकुलमानसः ।
राक्षसान्प्रेषयामास हंतुं दाशरथी रणे. ॥ ७७१

चैलच्छिलोच्च **य** निभा महोत्साहा महौजसः ।

---

१. पादयोरर्पितं शिरो येन सः. २. व्रणाः संजाता एषु तानि. ३. शत्रूंच्या बाणांनीं. ४. निर् (नास्ति) अमित्रः (शत्रुः) यस्य सः. ५. 'उपलालनार्थं नाथशब्दप्रयोगः' तू= किंवा नाथेन=सनाथेन=युक्तेन. ६. कुशलः. ७. नस्+सप्तम्यर्थे तसिल् प्र०=नासिकायाम्. ८. प्ररूढव्रणः । जखमा भरून आल्या. ९. खरः असिः यस्य तम् । तीक्ष्णखड्गम्. [सर्ग १२ श्लो० ३७-६४.] १०. चलन्तः (जंगमाः) शिलोच्चयाः (पर्वताः) तैः तुल्याः । हें नित्यसमासाचें उदाहरण.

दशानन[1]प्रिये युक्ता मुक्ताश्चापादि[2]वेषवः. ॥ ७७२

लब्ध[3]लक्षाः सु **रा** णां ये युद्धे कज्जल[4]मेचकाः ।
नरमांसाशनाः क्रूराः शूराः परिघ[5]बाहवः. ॥ ७७३

चतुरंगेण **म** हता बलेन परिवारिताः ।
महाबलाः कवचिनः[6] सर्वामर[7]सुदुःसहाः. ॥ ७७४

ते **रा**वणस्यां **ज** लिना प्रहिता[8] अहिता[9] दिवः ।
त्यक्तप्राणा[10] विनिर्गत्य युयुधुर्विविधायुधाः. ॥ ७७५

तानाजावज **य** न्कीशा **दा**शरथ्योश्च मार्गणाः ।
गता **य**मक्षयं सर्वे मत्ताः संताप[11]हेतवः. ॥ ७७६

अन्योन्यमेव **ज** घ्नुस्ते **रा**मसादृश्यमोहिताः ।
गांधर्वास्त्रे[12] संप्रयुक्ते राक्षसा विलयं गताः. ॥ ७७७

बाणैः **कौ**सल्ये **य** मुक्तैर्मुहूर्तद्वयतो रणे ।
सप्तकोट्यस्तथैकोनत्रिंशल्लक्षाणि सद्रथाः. ॥ ७७८

हताश्च कुंज **रा** मत्तास्ते सहस्राणि विंशतिः ।
तथा द्वादशलक्षाणि तथैव दशकोटयः. ॥ ७७९

षष्टिस्तुरंग **म** वराः सहस्राण्यथ विंशतिः ।
लक्षाणि ते दशशतकोटिसंख्याः प्रमर्दिताः[13]. ॥ ७८०

पदातयश्च **श्री** शेन निहताः शतकोटयः ।
पंचचत्वारिंशदष्टाशीतिर्लक्षाणि चाहवे. ॥ ७८१

सिद्धर्षयः सु **रा** श्चैव गंधर्वाश्चारणास्तथा ।
साधु साध्विति **रा**मस्य तत्कर्म समपूजयन्. ॥ ७८२

---

१. दशाननाचें प्रिय (इष्ट) करण्याकरितां उद्युक्त असलेले. २. जणूं काय ते धनुष्यापासून बाणच सुटले. ३. लब्धं लक्षं (कीर्तिः) यैस्ते. ४. कज्जलवत् श्यामाः. ५. परिघावत् (अडसराप्रमाणें) सुदृढौ दीर्घौ च बाहू येषां ते. ६. कवचधारिणः. ७. सर्वैरमरैः सुष्टुदुःसहाः. ८. इतके राक्षसवीर मेले हें पाहून अवशिष्ट वीर कदाचित् आतां समरांत विमुख होतील अशी रावणाला भीति पडल्यामुळें त्यानें आतां त्याच्या पुढें हात जोडले. ९. स्वर्गाचें (स्वर्गवासि लोकांचें) अहित करणारे. १०. ज्यांनीं आपल्या जीवाची देखील परवा केली नाहीं असे, जीवावर उदार होऊन. ११. सत्+ताप+हेतवः=सत्पुरुषांच्या तापाला कारण झालेले. १२. गांधर्वास्त्र सोडलें असतां. १३. काव्यसंग्रहग्रंथमाला–रामायणें भाग १–मंत्ररामायण–युद्धकांड–गीति ६११-६१६ पृ० १४१ पहा.

उवाच **रामो म** धुरं सुग्रीवादीन्प्रति प्रभुः, ।
'एतदस्त्रबलं भीमं मम[1] वा त्र्यंबकस्य[2] वा.' ॥ ७८३

हत्वा रक्षोरा **ज** सेनां शस्त्रास्त्रेषु जितक्लमः[3] ।
संस्तूयते स्म त्रिदशै[4] **रामो** हृष्टैर्महर्षभिः. ॥ ७८४

राक्षसानां क्ष **य** स्तेन **रावणे**न श्रुतो महान् ।
विलापो राक्षसीनां च शोकार्तानां सुदुःसहः. ॥ ७८५

शोकक्रोधप **रा** धीनो **द**शकंठस्ततः स्वयम् ।
नगरान्निर्ययौ हंतुं सबलौ **रामलक्ष्मणौ.** ॥ ७८६

वृतः सैन्येन **म** हता रथारूढो महाबलः ।
**म**होदर**म**हापार्श्व**वि**रूपाक्षैः समन्वितः. ॥ ७८७

स्यंदनेन प्र[5] **ज** वितप्रवराष्टहयेन सः ।
द्वारेण निर्ययौ तेन यत्र तौ **रामलक्ष्मणौ.** ॥ ७८८

तदोत्पाता[6] भ **य** स्यारात्[7]सूचका बहवोऽभवन् ।
निष्प्रभो[8]ऽर्कः[9] शिवा[10] नेदु[11]श्चस्खलुश्चास्य वाजिनः. ७८९

राजराजानु **ज** मरिं दृष्ट्वायातं प्लवंगमाः ।
विनेदुर्यातुधाना[12]श्च घोरमंभोधरा[13] इव. ॥ ७९०

रावणेन क्ष **य** श्चक्रे कपीनां भूयसां शरैः ।
परैः सोढुं न ये शक्या यैः सुरा त्रिजिताः खरैः. ७९१

**सुग्रीवो** वान **रा** धीशः प्रतापी पादपायुधः[14] ।
प्रतस्थे[15]ऽभिमुखं सार्द्धं यूथपै**र्द**शकंधरम्. ॥ ७९२

ननर्द युधि **म** न्यूग्रः स्वरेण महता महान् ।
पोथयन्[16]राक्षसाञ्शिष्टान्दशग्रीव[17]पुरःसरान्. ॥ ७९३

---

१. मम=रामस्य=विष्णोः. २. त्रीणि अंबकानि यस्य तस्य । त्रिनेत्रस्य शिवस्य. ३. जितश्रमः. ४. देवैः. ५. प्रकृष्टो जवः प्रजवः । सोऽस्त्येषां ते प्रजविताः । अति वेगाचे उत्तम आठ घोडे ज्याला जुंपले आहेत अशा रथांत बसून । प्रजविताः प्रवराः अष्टौ हयाः यस्मिन् युक्ताः तेन. [सर्ग ९५ श्लो० ३२-४२.] ६. तदा उत्पाताः (अशुभानि शकुनानि). ७. आरात्=समीप. ८. निस्तेज. ९. सूर्य. १०. कोल्हे शब्द करूं लागले. ११. घोडे ठोकर खाऊं लागले. १२. राक्षसाः. १३. जलधरा इव. १४. वृक्ष ज्याचें आयुध आहे तो । पादैः (मूलैः) पिबति जलमिति पादपः वृक्षः. १५. संमुख आलेल्या रावणाकडे. १६. मर्दयन्. १७. दशग्रीवः पुरःसरो येषां ते तान्.

रक्षोबलेषु **श्री** मान्स वृष्टिं चक्रे महीभृताम्[1] ।
ममर्द तान्महाव्रातः प्रवृद्धान्नगमानिव[2]. ॥ ७९४

विरूपाक्षं दु[3] **रा** पातं कपिकंपप्रदायुधम्[4] ।
वानरेंद्रो व्यमुं चक्रे तं च वीरं **म**होदरम्. ॥ ७९५

महापार्श्वस्य **म** थनं वालिनस्तनयोऽकरोत् ।
चकार कोपं तद्दृष्ट्वा राक्षसानामधीश्वरः. ॥ ७९६

तामसास्त्रेण[5] **र्ज** गतो विधात्रा[6] निर्मितेन सः ।
हत्वा विद्राव्य[7] च कपीन्बहून्**रा**ममुपाययौ. ॥ ७९७

**सु**मित्रात्म **य** स्तेन **रा**वणेन सह स्वयम् ।
युयुधे प्रथमं वीरो राहुणेव निशाकरः. ॥ ७९८

ततैः शतैः[8] श **रा** णां तं व्याकुलीकृत्य **ल**क्ष्मणम् ।
व्यसृजच्छरवर्षाणि **रा**ममासाद्य **रा**वणः. ॥ ७९९

भल्लैश्चिच्छेद[9] **म** हतः शरौघांस्तस्य[10] **रा**घवः ।
विव्याध **रा**मं स पुनः शरैर्दर्शितलाघवः[11]. ॥ ८००

**रा**वणे व्यसृ **ज** द्रामः शरवर्षाणि संततम् ।
**रा**मेऽपि **रा**वणो, वीरावुभौ शस्त्रास्त्रपारगौ[12]. ॥ ८०१

अस्त्रप्रयोगं **य** त्तौ तौ चक्रतुर्युद्धपंडितौ ।
खंडितौ यौ न कुत्रापि समरे जयमंडितौ. ॥ ८०२

**ल**क्ष्मणोऽथ ध्व **ज** च्छेदं शिरच्छेदं च सारथेः ।
ततश्चक्रे धनुच्छेदं सायकैर्जयदायकैः. ॥ ८०३

**बि**भीषणो ह **य** श्रेष्ठान्भ्रातुर्ज्येष्ठस्य संगरे ।
जघानाप्लुत्य गदया न दयास्त्यतिपापिनि. ॥ ८०४

ततः खरत **रा** माशु क्रोधादशनिसन्निभाम् ।
**बि**भीषणाय[13] चिक्षेप शक्तिं शक्तिमतां वरः. ॥ ८०५

---

१. पर्वतानाम्. २. वृक्षान् । नगान्. ३. दुःसहः आपातः यस्य तम्. ४. कपिकंपं प्रददाति[illegible] इति । कपिकंपप्रदमायुधं यस्य तम्. ५. तमोग्रहदेवताकमस्त्रम्. ६. जगत्स्रष्टा यानें, ब्रह्मदे[illegible]ानें. ७. पळवून. ८. सोडलेल्या शेंकडों शरांनीं । किंवा 'स तैः' असा पाठ घ्यावा. ९. [illegible]ाल्यांनीं. १०. शर+ओघ+द्वि०प्र०=शरसमूहान्. ११. दर्शितं लाघवं (लघुहस्तता, शर[illegible]मोक्षणकुशलता) येन सः. १२. शस्त्रास्त्रेषु पारंगतौ. १३. बिभीषणमुद्दिश्य । 'यमुद्दिश्य क्रिय[illegible] प्रवर्तते सोऽपि संप्रदानसंज्ञः स्यात्.'

अप्राप्तामेव **म** ध्ये तां लक्ष्मणस्त्रिभिराशुगैः ।
चिच्छेद खेदयन्युद्धे दशकंठस्य मानसम्. ॥ ८०६

अन्यां च शक्र[1] **श्री** हर्ता शक्तिं जग्राह दारुणाम् ।
त्रातुं बिभीषणं तस्थावग्रतस्तस्य लक्ष्मणः. ॥ ८०७

तमुवाच श **रा** सारैश्छादयंतं स रावणः, ।
'बिभीषणो मोक्षितश्चेत्त्वयीयं विनिपात्यते.' ॥ ८०८

इत्युक्त्वा शक्तिं **म** त्युग्रां चिक्षेप मे[2]यनिर्मिताम् ।
मोघा भवेति रामोक्ता तद्वक्षसि ममज्ज सा. ॥ ८०९

पपात मोहं **ज** नयन्रामेऽपि भुवि लक्ष्मणः. ।
न विषादस्य कालोऽयमिति संचिंत्य राघवः ॥ ८१०

कौसल्यातन **य** श्चक्रे तुमुलं युद्धमोजसा ।
विचकर्ष ततः शक्तिं तां विकृष्य बभंज च. ॥ ८११

तदा खराः श **रा** स्तस्य शक्तिं निष्कर्षतोऽरिणा ।
बलीयसा दशास्येन गात्रे रामस्य पातिताः. ॥ ८१२

अ[3]चिंतयित्वा **म** र्मघ्नांस्तानिषूनरिणेरितान्[4] ।
समाश्लिष्यानुजं रामः सुग्रीवादींस्तदाब्रवीत्. ॥ ८१३

'परिवार्यैव **ज** न्येऽमुं संतिष्ठध्वं वनौकसः ! ।
यावद्धन्म्यहितं[5], कालः प्राप्तोऽयं मे [6]चिरेप्सितः.॥८१४

जातोऽक्षिविष[7] **यं** श्चायं नैव जीवितुमर्हति ।
वि[8]नतातनयेनेव दृष्टो दुष्टो भुजंगमः. ॥ ८१५

करिष्यामि त्रि **ज** गति ख्यातं कर्माद्य यत्सुराः ।
नराश्च कथयिष्यंति यावच्चंद्रभास्करौ.' ॥ ८१६

एवमुक्त्वा सा **य** कौघैराजघान दशाननम् ।
स साध्वसात्प्रदुद्राव यथा वातहतोऽबुदः. ॥ ८१७

दशग्रीवं प **रा** भूय केसरीव महागजम् ।
ददर्श करुणासिंधुर्लक्ष्मणं मूर्च्छितं भुवि. ॥ ८१८

---

१. इंद्राच्या श्रीचें हरण करणारा. २. मयासुरानें आंदण दिलेली. वा० रा० उत्तर[illegible], स० १२ श्लो० २१. ३. अगणयित्वा । परवा न करून. ४. अरिणा ईरितान्=शत्रूनें सोड[illegible]लेल्या ५. यावत् हन्मि अहितं (शत्रुम्). ६. फार दिवसांपासून ज्याची इच्छा केली होती असा[illegible] काल ७. अक्ष्णोः विषयः जातः=दृष्टिपथमागतः. [स० १०० श्लो० ५३-५४.] ८. वैनतेयानें, गर[illegible]डानें

ततः सुषेण **म**[१] गदंकारं रघुवरोऽब्रवीत्, ।
'लक्ष्मणोऽयं यदि मृतः, प्राणैः किं मे प्रयोजनम्?'॥८१९

तदा सुषेणः **श्री** मंतं तं हनूमंतमब्रवीत्, ।
'गच्छ तात! द्रुतं त्वं ता ओषधीः पुनरानय.' ॥८२०

गत्वा शृंगं धँ[३] **रा** भृत्तो गृहीत्वा पुनरागतः. ।
सुषेणस्तं प्रशस्याथ गृहीत्वा तां महौषधिम् ॥ ८२१

[४]संक्षोदयित्वा **म** तिमांस्तद्रसं सोऽमृतोपमम् ।
लक्ष्मणाय ददौ नस्तो[५] नस्तो[६] यस्मान्मृतिव्यथे[७]. ॥ ८२२

विशल्यो विरु **ज** स्तूर्णमुदतिष्ठत्स लक्ष्मणः ।
तमालिंग्याभवद्रामो बाष्पपर्याकुलेक्षणः ॥ ८२३

प्रहृष्टा हर **य** स्तं ते पूजयामासुरुत्थितम् ।
रामरावणयोर्युद्धं प्रवृत्तं पुनरद्भुतम्. ॥ ८२४

भूमौ स्थिरस्य **रा** मस्य रथस्थस्य च रक्षसः ।
न समं युद्धमित्याहुर्देवगंधर्वकिन्नराः. ॥ ८२५

तच्छ्रुत्वा शत[८] **म** न्युः स्वं सखायं सूतमब्रवीत्, ।
'मातले! गच्छ रामं त्वं मद्रथे स्थापयाश्वि'ति.॥८२६

शक्राज्ञया प्रां **ज** लिना प्रार्थितस्तेन राघवः ।
आरुह्य स्यंदनं दिव्यं युयुधे सह र[९]क्षसा. ॥ ८२७

गांधर्वमथ **य** दैवमस्त्रं रा[१०]क्षसमद्भुतम् ।
प्रयुक्तमरिणा रामः प्रत्यस्त्रेण जघान तत्. ॥ ८२८

स चकार ध्व **ज** च्छेदं मर्दयित्वा प्रभुं शरैः ।
ऐन्द्रानपि जघानाश्वान्विद्धा मर्मसु मातलिम्.॥ ८२९

त्रिदशा ऋष **य** स्त्रस्ता दृष्ट्वार्तं रघुनंदनम् ।
व्यथिता वानरेंद्राश्च बभूवुः सबिभीषणाः. ॥ ८३०

तदा क्रूरत **रा** जाता उत्पाता बहवो रणे ।
जगाम सुमहाक्रोधं रामस्तामरसेक्षणः[११]. ॥ ८३१

---

१. [वै]द्याला । कारे सत्यागदस्य. ६।३।७०. २. सर्ग १०१ श्लो० २-३२ पहा. ३. धरा-भृत्+[ष]ष्ठ्यर्थे तसिल्. ४. संमर्दुं । चोळून. ५. नासिकायाम् । नस्+सप्तम्यर्थे तसिल्. ६. न भवतः. ७. मृतिश्च व्यथा च. ८. शतक्रतु । इंद्रः. ९. सर्ग १०२ पहा. १०. रक्षः देवता अस्य इति रा[क्ष]सम् । या अस्त्रानें बाण सर्प होऊन दंश करूं लागले. ११. कमलदलेक्षणः.

तस्मिन्क्रुद्धे स **म** र्थे भूः प्राकंपत सपर्वता ।
सर्वभूतानि वित्रेसुः क्षुभितः सरितांपतिः. ॥ ८३२

शूलं गृहीत्वा **श्री** दस्य भ्राता परमदारुणम् ।
हतोऽसीति ब्रुवन्रामं प्रति चिक्षेप कोपतः. ॥ ८३३

दग्ध्वात्मनः शे **रा** न्घोरानापततं महाप्रभम् ।
रामो वासवशक्त्या तं शूलं चिच्छेद भीमया. ॥ ८३४

शरैस्तुरंग **म** श्रेष्ठांस्तस्य विद्ध्वा रघूत्तमः ।
निर्बिभेदोरसि क्रूरं ललाटेऽपीषुभिस्त्रिभिः ॥ ८३५

रामोऽपि प्रति **ज** ग्राह शरानुग्रस्य रक्षसः ।
दृष्टः शोणितदिग्धांगः स फुल्ल इव किंशुकः ॥ ८३६

कौसल्यातन **य** स्यास्य छित्त्वा शस्त्राण्युवाच तम्, ।
'शून्याश्रमात्त्वया चौरचर्यया राक्षसाधम ! ॥ ८३७

भार्या मम र्पे **रा** मृष्टा तस्मात्त्वं नासि वीर्यवान् ।
अद्य त्वां सायकैस्तीक्ष्णैर्नयामि यमसादनम् ॥ ८३८

गर्वमद्य स **म** स्तं ते संहर्तुं शिरसा सह ।
स्थितोऽस्मि पुरतस्तिष्ठ त्वं पाप! पुरुषो भव.' ॥८३९

एवमुक्त्वा भ्रा **ज** मानैस्ताडयामास तं शरैः ।
कपयश्चाश्मभिर्जघ्नुः स तदा व्याकुलोऽभवत्. ॥ ८४०

सारथिः सुप्रि **य** स्तस्य तदवस्थं निरीक्ष्य तम् ।
शनैर्युद्धाद‌संभ्रांतः शतांगं स न्यवर्तयत्. ॥ ८४१

स मोहमुक्तो **ज** नितक्रोधो धिक्कृत्य सारथिम् ।
उवाच परुषं प्राज्यं कालनष्टमतिर्हि यत्. ॥ ८४२

सूतस्तमाह, '**यं** द्राजन्कश्मलं त्वयि संगरे ।
दृष्टं मया न तत्पूर्वं तेन[11] त्वमपवाहितः. ॥ ८४[illegible]

यद्वक्ष्यस्यद्य **रा** जन्! मां तत्करिष्याम्यसंशयम् ।
नाहं भीतो[12] भेदितो वा स्नेहेनैतत्कृतं मया.' ॥ ८४४

---

१. समुद्रः. २. इंद्रशक्त्या. [सर्ग १०२ श्लो० ६२-६८.] ३. चौरकर्मणा. [स० १०३ श्लो० १०-२२.] ४. धर्षिता. ५. दीप्तैः. ६. न घाबरलेला. ७. अपगतमूर्च्छः. ८. पुष्कळ. ९. कालानें नष्ट केली ज्याची मति असा. १०. मूर्च्छा. ११. युद्धभूमीवरून एकीकडे आणला. १२. कोणत्या तरी प्रकाराची लालूच दाखवून परपक्षाकडील मनुष्य स्वपक्षाला अनुकूल करून घेतला म्हणजे त्याला 'भेदित' किंवा 'उपजप्त' म्हणतात.

श्रुत्वेति वाक्यं **म** धुरं प्रसन्नहृदयोऽभवत् ।
दद‍ौ तस्मै शुभं ह्येकं हस्ताभरणमात्मनः. ॥ ८४५

सूतो रथं तं **श्री** दस्य भ्रातुर्वचनगौरवात् ।
निनाय रघुवीरस्य पुरतः प्रेरयन्हरीन्. ॥ ८४६

दशाननप **रा** भूतिचिंतया व्यग्रमानसम् ।
उपागम्याब्रवी**द्राम**मगस्त्यो भगवानृषिः. ॥ ८४७

'भो **राम**भद्र, **म** त्प्रोक्तं शृणु गुह्यं सनातनम् ।
येन सर्वानरीन्वत्स! प्रजेष्यसि रणाजिरे.' ॥ ८४८

स एवमुक्त्वा **ज** यदमादित्यहृदयं ददौ ।
जपित्वा जेष्यस्यद्य त्वं **रावणं** शक्रशात्रवम्. ॥ ८४९

उपदिश्येति **य** शसानुपमोऽथ जगाम सः ।
**रा**मोऽपि जप्त्वा स्तोत्रं तत्परं हर्षमवाप्तवान्. ॥ ८५०

मूर्तिमानर्भ **रा** धीशो रविः सुरगणे स्थितः ।
**राम**ं 'दशाननं हंतुं त्वरस्वे'ति वचोऽब्रवीत्. ॥ ८५१

**राम**ोऽथ शत **म** न्योस्तं सारथिश्रेष्ठमब्रवीत्, ।
'**मा**तले! पश्य संरब्धमापतंतं रथं रिपोः ॥ ८५२

तिष्ठप्रमादो **ज** न्येऽस्मिन्प्रत्युद्गच्छ रथं रिपोः ।
विध्वंसयितुमिच्छामि वायुर्मेघमिवोत्थितम्. ॥ ८५३

रथं प्रचोद **य** क्षिप्रमि'त्युक्तः स तथाऽकरोत् ।
चक्रसंभूतरजसा **रावणं** संव्यधूनयत्. ॥ ८५४

स चापमैद्रं **ज** ग्राह शरांश्चार्ककरप्रभान् ।
युद्धं तयोस्तदारब्धं दृप्तयोरिव सिंहयोः. ॥ ८५५

---

१. कंकणम्. [सर्ग १०४ श्लो० १५-२६.] २. विद्रावयन्. ३. दशाननाचा पराजय कसा हो[illegible]ईल या चिंतेनें व्यग्र मानस ज्याचें झालें आहे अशाला. ४. रहस्यम्. [सर्ग १०५ श्लो[illegible]० २-२७.] ५. सनातननित्यनेन स्वकल्पितत्वनिरासः. ६. 'य एषोऽन्तरादित्ये हिरण्[illegible]यः' इत्याद्यशेषश्रुतिप्रसिद्धं ब्रह्म तद्देवताकत्वात्तदाख्यं स्तोत्रम्. वा० रा० युद्ध० स० १०[illegible]. ७. शक्रशत्रुम् । शत्रुरेव शात्रवः, स्वार्थेऽण्. ८. देवदेवः । ब्रह्मविष्णुरुद्राणाम[illegible]पि उपास्यत्वात्. ९. न प्रमादोऽस्येति । सावधानः. १०. चक्रोत्थितधूलिसमूहेन. ११. अकंपय[illegible]त्. १२. सूर्यकिरणतुल्यान् । अर्कस्य किरणानामिव प्रभा येषां तान्. १३. बलगर्वितयोः मानि[illegible]नोः । 'अनुहुंकुरुते घनध्वनिं नहि गोमायुरुतानि केसरी' यावरून सिंहाचा मानी स्वभाव सुव्य[illegible]क्त होतो.

देवाश्च मुन**य** श्चैव वानरा रजनीचराः ।
युद्धं समागता द्रष्टुं विस्मिताश्चित्रवत्स्थिताः ॥ ८९६

तदा बभूव **रा** ज्ञोस्तद्वैरथं परमाद्भुतम् ।
रामरावणयोर्युद्धं रामरावणयोरिव. ॥ ८९७

जेतव्यमिति **मं** र्त्येशो मर्तव्यमिति रावणः ।
धृतौ स्ववीर्यसर्वस्वं युद्धेऽदर्शयतां तदा. ॥ ८९८

रामः शरेण **श्री** मंतं ध्वजं चिच्छेद रक्षसः ।
तेन तन्मनसि क्रोधः प्रजज्वाल सुदुःसहः. ॥ ८९९

---

१. द्वौ रथौ ययोस्तौ द्विरथौ । तयोरिदं द्वैरथम्. रामरावणाचें युद्ध सात अहोरात्र झालें. सातवी रात्र उलटल्यावर (नवव्या दिवशीं) रावणवध आश्विन शुद्ध नवमीस झाला. [सर्ग १०७ श्लोक ६५.] २. हें **'अनन्वय'** नामक अलंकाराचें उदाहरण आहे. जेथें ज्याची त्यालाच उपमा दिली असते म्हणजे जेथें उपमानत्व आणि उपमेयत्व हीं दोन्हीं एकाच वस्तूवर असतात, तेथें हा अलंकार होतो. जसें:—गगन हें गगनासारखें आहे, रामरावण हे रामरावणोपम होत. याचें लक्षण व उदाहरण:—'उपमानोपमेयत्वं यदेकस्यैव वस्तुनः । इंदुरिंदुरिव श्रीमानित्यादौ तदनन्वयः ॥ गगनं गगनाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिव ॥.' आणखी प्राकृत उदाहरणें:—(१) झाले बहु, होतिल बहु, आहेतहि बहु, परंतु यासम हा; । यास महादेवा! दे जय, पाहिन कधिं धनंजयास महा ॥ [मोरोपंत—विराटपर्व—अध्याय ४ गीति ७५; काव्यसंग्रह—पृ० ९६], (२) शक्र म्हणे, 'बा! तुजसम तूंचि भला विश्वमहित तरशील, । व्यसनातें बंधूंसह निर्दाळुनि सर्व अहित तरशील. ॥ [मोरोपंत—वनपर्व—अध्याय २ गीति ११४; काव्यसंग्रह—पृष्ठ २७], (३) श्रीरामरावणसमर होय श्रीरामरावणसमरसा । ते वृष्टि जसे न करिति तसि शुचि सशकार रावण समरसा. ॥ [वनपर्व—अध्याय १२ गीति ६६; काव्यसंग्रह—पृष्ठ १७९], (४) होय रामराज्य रामराज्यसेंचि तोखद, व्याधि जो भवाख्य उग्र हें तयासि ओखद । कीं करी प्रकाशुनि स्वसन्महा निरंजन, श्रीशबुद्धिचें हरूनि जन्म हानि रंजन ॥ [पंचचामर रामायण—श्लोक ८१; सर्वसंग्रह—पृष्ठ ४०५], (५) यासम हाचि धनुर्धर म्हणतां उपमन्युसुरतरु रुसेना । रण विसरतिल रिपुचमू जेंवि हरिसमक्ष सुरत रुरुसेना. ॥ [मोरोपंत—कर्णपर्व—अध्याय ४० गीति ५९; सर्वसंग्रह—पृष्ठ १६५.] (६) जनिमृति वारुनि गति दे शबरीतें पूजितांचि ते बरवी । यासम हाचि दयाकर पाहे आणिक जगीं असा न रवी ॥ ५८ ॥ [मोरोपंत—रामायणें भाग २—शिवरामायण द्वितीय—पृ० ९७], (७) बहु असति परंतु म्हणति वाल्मीकिप्रमुख विप्र, 'यासम हा । प्रभुच्या प्रेमें पावे मारुति होऊनि विप्रयास महा.' ॥ २४ ॥ [परंतुरामायण—पृ० १८०], (८) धर्मराज म्हणे, 'देवऋषी! । ज्ञानविज्ञान तपोराशी । तुळितां तुझिया सामर्थ्यासी । तुजसारिखा तूं एक ॥ १ ॥ [मुक्तेश्वर—सभापर्व—अध्याय ५; काव्यसंग्रहग्रंथमाला—पृ० ५०.] ३. मर्त्यांनां ईशः । नरेशः. ४. धृतौ=धृत्वा=निश्चयेन, बुद्ध्या. ५. स्ववीर्यरूप सर्व धन.

वृष्टिं चक्रे श **रा** णां स क्रुद्धो युद्धोद्यतः प्रभौ ।
नानाविधायुधानां च गिरीणां भूरुहामपि. ॥ ८६०

तां वृष्टिं पर **म** प्राज्ञो रामश्चिच्छेद सायकैः ।
ततोऽच्छिनत्तस्य शिरः श्रीमज्ज्वलितकुंडलम्. ॥ ८६१

तस्य शीर्षांबु **ज** च्छेदे हृष्टा देवर्षयो भृशम् ।
अन्यत्तेनैव सदृशं **रा**वणस्योत्थितं शिरः. ॥ ८६२

छिन्नं तदपि **य** त्नेन प्रभुणा क्षिप्रकारिणा ।
छिन्नमात्रं च तच्छीर्षं पुनरेव व्यदृश्यत. ॥ ८६३

एवमेव सु **रा** रातेस्तुल्याकारं शिरःशतम् ।
छिन्नं **रा**मेण समरे क्षिप्रहस्तेन मार्गणैः. ॥ ८६४

**द**शकंठस्य **म** रणमपश्यन्**रा**घवो रणे ।
चिंतयामास बाणानाममोघानां विपर्ययम्. ॥ ८६५

सप्तरात्रमं **ज** स्रं तत्तयोर्युद्धमभून्महत् ।
उवाच मातली **रा**म'मस्त्रं पैतामहं प्रभो! ॥ ८६६

अस्त्रप्रणाशा **य** रिपोर्विसृज त्वं रघूत्तम!' ।
स्मारितः **श**क्रसूतेन **रा**मो वीरशिरोमणिः. ॥ ८६७

**य**म**म**गस्त्यो द्वि **ज** श्रेष्ठो ददौ पूर्वं महाशुगम् ।
अभिमंत्र्य तमेवाशु चिक्षेप ब्रह्मनिर्मितम्. ॥ ८६८

स तस्य हृद **य** स्येषुर्भेदं कृत्वा महाद्विषः ।
भुवस्तलं विवेशाथो तूणीरं च विनीतवत्. ॥ ८६९

गतप्राणो ध **रा** यां स राक्षसेंद्रो **द**शाननः ।
पपात पापो वज्रेण हतो **वृ**त्र इवाहितः. ॥ ८७०

---

१. भू+रुह+ष०प्र०=वृक्षाणाम्. २. ज्वलितं (दीप्तिमत्) कुंडलं यस्मिंस्तत्. ३. लघुक्रियेण, लघुहस्तेन. ४. छिन्नमेव । केवलार्थे मात्रच्प्रत्ययः. ५. तुल्य आकारो यस्य तत्. ६. शिरसां शतम् । शंभर शिरें. 'खरविशिखें जगदीशें रामें जें छेदिलें दशास्यशिर, । तें तें झालें प्रकट ब्रह्मवरानें न लावितां उशिर. ॥ दशमूर्धतोयजें तीं, शतवार च्छेदितां नृपें नि-रें; । दशमुख पद नमुनि जणों 'पुरे' असा प्राथिला शिरोनिकरें. ॥ मग तो रघुराज बळी रायासि निर्जरद्वेषी; । ब्रह्मास्त्रें अभिमंत्रुनि अगस्तिदत्ताशुगाप्रति प्रेषी. ॥' [मंत्ररामायण—ंड—गीति ६९९-७०१ पृ० १४९.] ७. लघुहस्तेन. ८. भेदनसामर्थ्यगुणाचा बदल. ९. सप्तानां रात्रीणां समाहारः सप्तरात्रम् । 'रात्राह्नाहाः' इत्यादि सूत्राखालीं 'संख्यापूर्वं रात्रं ' असें वार्तिकसूत्र आहे. २।४।२९ व २।३।५. १०. सतत. ११. अथो=अथ.

दृष्ट्वा पतित **म** त्यार्ता हतशेषा[1] निशाचराः ।
हतनाथा[2] भयग्रस्ता लंकामभ्यपतन्द्रुतम्. ॥ ८७१

निशाचरास्ते **श्री** मद्भिर्नदद्भिर्जितकाशिभिः[3] ।
वानरैर्मर्दिताः क्रुद्धैर्घना इव समीरणैः[4] ॥ ८७२

विजये रघु **रा** जस्य व्यनदद्देवदुंदुभिः ।
दिव्यगंधवहस्तत्र[5] मारुतः सुसुखो[6] ववौ. ॥ ८७३

वृष्टिस्तदा सु **म** नसां दिव्यानां निपपात खात् ।
सुरर्षिभिः कृता पुण्या स्तुती रामस्य शुश्रुवे ॥ ८७४

मरुद्गणाः[7] प्र **ज** ग्मुस्ते शमं स्वर्गायना जगुः[8] ।
अगुः[9] स्वास्थ्यं च लोकेशाः सुप्रभोऽभूत्सहस्रगुः[10]॥ ८७५

रामः प्राप्तज **य** स्तत्र मुमुदे सकपीश्वरः ।
भ्रातरं निहतं दृष्ट्वा विललाप[11] बिभीषणः ॥ ८७६

सांत्वितः स गि **रा** माध्व्या[12] श्रीरामेण महात्मना ।
बिभीषणस्तं संस्कर्तुं प्रार्थयामास राघवम्. ॥ ८७७

'शांतिर्वैरस्य[13] **म** रणं, निवृत्तं नः प्रयोजनम् ।
क्रियतामस्य संस्कारो[14] ममाप्येष[15] यथा तव.' ॥ ८७८

---

१. हताः शेषो येषां ते । मेलेले वजा करून शिल्लक राहिलेले. २. हतो नाथो येषां ते. ३. जितेन (जयेन) प्रकाशंते इति तैः । जयिभिः. ४. वायुभिः. ५. दिव्यं गंधं वहति इति. ६. अतिशय सुखावह. ७. देवगणाः. ८. स्वर्गांतील गान करणारे (गंधर्व) यशाचा पोवाडा गावूं लागले. ९. अ+इण् (गा लुङि)+लुङ् उस्. १०. सहस्रं गावो यस्य सः । सहस्ररश्मिः, 'गोस्त्रियोः' इति ऱ्हस्वः. १।२।४८. ११. रविवंशोत्तम वाक्यें जाउनि तो बंधुतें परेतातें । आलिंगूनि म्हणे, 'हा! केलें सुरकाम त्वां पुरें तातें. ॥ तव हृदय श्रीकंठीं, 'शिवशिव' म्हणशी सदैव तूं वदनें; । म्हणुनि जणो तुज वधिलें, शिवदग्धें अन्यदुःसहें मदनें. ॥ कीं राज्यमदें राजा! शिवासि विसरूनि सेविला काम; । या अन्यायें क्षोभ स्मररिपुचा जाहला महोद्दाम. ॥ वसुधासुरामराशीं केला तूं द्रोह, पीडिला धर्म; । कर्म अमंगळ करितां भूतरिपू कोण पावला शर्म? ॥ पापाचारें निजजन नरवानरहस्तकेंचि मारविला; । मारविलासतमानें गिळिलें तुज राक्षसोत्तमा! रविला.' ॥ [रामायणें भाग १—मंत्ररामायण—युद्धकांड—गीति ७१५-७१९ पृ० १५१]. १२. मधुरया. १३. मरणांतानि वैराणि. १४. और्ध्वदेहिकम्, अंत्येष्टिसंस्कारः. १५. मम अपि स्नेहविषयः. माझाही हा (रावण बंधु) जसा तुझा. [असाच उद्गार मंत्ररामायणांत आहे—'करणें क्रिया यथोक्त, त्वद्बंधु जसा तसाच हा माझा' इत्यादि पहा. गीति ७१३. तसेंच मूळ रामायणांतही 'ममाप्येष यथा तव' हेच शब्द आहेत. 'मरणांतानि वैराणि निवृत्तं नः प्रयोजनम् । क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥.' सर्ग १०९ श्लोक २५.]

इत्युवाच त्रि **ज** गतां नाथो रघुकुलोत्तमः ।
[१]तमःप्रशमकृन्नामा सर्वभूतेषु यः समः ॥ ८७९

अथ सर्वाः स्त्रि **य** स्तस्य मृतं श्रुत्वा तमीश्वरम् ।
**मं**दोदरीप्रभृतयो विलापं चक्रुराकुलाः. ॥ ८८०

अंतः पुराद्रा **ज** भार्या विनिष्पेतुः [२]शुचार्दिताः ।
[३]रणपांसुषु चेष्टंत्यो [४]मुक्तकेश्यो [५]हतेश्वराः ॥ ८८१

ददृशुस्ताः प्रि **य** तमं पतितं रणपांसुषु ।
आलिंग्य रुरुदुः सर्वाः सा च **मं**दोदरी भृशम्. ॥ ८८२

[६]'इंद्रियाणि पु **रा** जित्वा जितं त्रिभुवनं त्वया ।
स्मरद्भिरिव तद्वैरमिंद्रियैस्त्वं विनिर्जितः ॥ ८८३

तं चापि काम **म** प्राप्य **मै**थिलीसंगमे कृतम् ।
पतिव्रतायास्तपसा नूनं दग्धोऽसि मे प्रभो ! ॥ ८८४

**सी**ता सतीयं **श्री** रेव **रा**मो **वि**ष्णुर्न मानुषः ।
हतोऽस्यतिक्रमान्नीतेर्धर्मस्य त्वं [७]महानपि ॥ ८८५

**मै**थिली सह **रा** मेण [८]विशोका विहरिष्यति ।
अल्पपुण्या त्वहं घोरे पतिता [९]शोकसागरे.' ॥ ८८६

---

१. तमसः (अज्ञानस्य) प्रशमं (नाशं) करोति इति । तमःप्रशमकृत् इति नाम यस्य सः. २. शोकानें पीडित झालेल्या. ३. रणांतील धुळींत. ४. मुक्ताः केशाः यासां ताः. ५. हत ईश्वरो यासां ताः. ६. 'कामुक होउनि कां मुकता, परमार्थसुखाला देह विका' अशा अर्थाचा उपदेश मंदोदरीसतीनें किति तरी उत्तम प्रकारें केला आहे. ७. येवढा ऐश्वर्यसंपन्न असूनही धर्मनीतीचें उल्लंघन केल्यामुळें नाश पावलास. ८. विगतः शोको यस्याः सा. ९. प्राकृत रामायणांत हें वर्णन कसें आहे तें पहाः—म्हणती, 'कां निजलासि क्षितिवरि ? उठ ये स्वकेलिशयनातें; । सप्रेम एकदां तरि पाहें, उघडोनि रम्यनयनातें.' ॥ ७२३ ॥ हे महिषीमय कन्या राशी मंदोदरी स्वयें आली; । आलिंगुनी तुज देवा ? समजावितसे तुझी प्रिया आली. ॥ तव पदभजनावांचुनि, नेणों आणीक हे तुझी आण । प्राणपते ! हें वदतों, मिथ्या कीं सत्य तें मनीं आण. ॥ अपराध काय झाला ? रुसवा केला दयानिधे ! कां जी ? । अमृतप्राशन करवुनि पाजावें काय शेवटीं कांजी ? ॥ सेवक अमरादि तुझे कांचनमय दुर्ग मुदितजनवर्ग; । भर्ग प्रसन्न झाला, अधिक तुला काय भासला स्वर्ग ? ॥ त्याच्या करीं समर्पण करणें, जो पुत्रतुल्य रक्षील; । आम्हांशि शोकहस्तीं दिधलें, हा या क्षणींच भक्षील.' ॥ ऐशा विगत श्री त्या विकलस्वांता द्विषन्निहतकांता । कांता दशाननाच्या करिती तेव्हां अनेक आक्रांता. ॥ [मंत्ररामायण—युद्धकांड पृ० १५२.]

इत्यार्ता तस्य **म** हिषीं तामन्याश्च **बि**भीषणः ।
सांत्वयामास बहुधा रुदतीः सुदतीः प्रियाः. ॥ ८८७

श्रीकौसल्यात्म **ज** स्तासां सांत्वनाय **बि**भीषणम् ।
**रा**वणस्य च संस्कारं कर्तुमाज्ञापयत्तदा. ॥ ८८८

'नाहं पापाश **य** स्यास्य परदाराभिमर्शिनः ।
कर्तुमिच्छामि संस्कारमि'त्युवाच **बि**भीषणः. ॥ ८८९

'मैवं ब्रूह्यद्य **रा** ज्ञस्त्वं संस्कारं कर्तुमर्हसि ।
मरणांतानि वैराणि ममाप्येष यथा तव.' ॥ ८९०

इत्युक्तः स स **म** र्थेन श्रीरामेण **बि**भीषणः ।
विधिवत्तस्य संस्कारं चकार विधिकोविदः ॥ ८९१

सांत्विताास्तेन **ज** ग्मुस्ताः स्त्रियः सर्वाः स्वकान्गृहान्. ।
**बि**भीषणो **रा**मपार्श्वे संप्रातिष्ठद्विनीतवत् ॥ ८९२

आज्ञां दत्त्वा 'न **य** रथं शक्रपार्श्वमि'ति प्रभुः ।
**मा**तलिं पूजयामास सखायं तं **श**तक्रतोः ॥ ८९३

**रा**मचंद्रोऽनु **ज** मथ प्रोवाच शुभलक्षणम्, ।
'बिभीषणमिमं सौम्य! लंकायामभिषेचय. ॥ ८९४

कामो मे हृद **य** स्थोऽयं परमो यद्बिभीषणम् ।
पुरेऽभिषिक्तं पश्येयं प्रियं पूर्वोपकारिणम्'. ॥ ८९५

**सौ**मित्रिर्वान **रा** न्दत्वा घटान्हैमान्मनोजवान् ।
व्यादिदेश समुद्रेभ्यः सलीलानयनं द्रुतम्. ॥ ८९६

---

१. शोभना दंता यासां ताः। 'संख्या सुपूर्वस्य'इत्यादि ५।४।१४०-१४१. अर्थसंगतिकरितां हा नवा श्लोक मोरोपंतानें घातला, परंतु असें करण्यामुळें पुढील श्लोकाच्या अर्थांत घोंटाळा होतो. २. पापः आशयः (अभिप्रायः) यस्य तस्य. ३. परदारान् अभिमृशति यस्तस्य। परस्त्रीला स्पर्श करणाऱ्याच्या. ४. श्लोक ८७८ यावरील टीपा पहा. ५. विधानज्ञः. ६. 'समवप्रविभ्यः स्थः.' १।३।२२ या नियमानें आत्मनेपद पाहिजे. किंवा 'प्रातिष्ठत विनीतवत्' असा पाठ कल्पावा. ७. इंद्राकडे. ८. अशोचांत बिभीषणाला राज्याभिषेक कसा केला अशी शंका असल्यास 'उद्यतैराहवे शस्त्रैः क्षत्रधर्मभृतस्य तु। सद्यः संतिष्ठते यज्ञस्तथाशौचमिति स्थितिः॥' हें मनुस्मृतिवाक्य ध्यानांत ठेवावें. याचा भावार्थः—'युद्धांत क्षात्र धर्मानें (पराङ्मुख न होतां) खड्गादिक शस्त्रां पासून जो मृत झाला त्याचा सद्यः (तत्क्षणीं) यज्ञ संपूर्ण होतो म्हणजे त्याला ज्योतिष्टोमादि यज्ञाचें पुण्य प्राप्त होतें, तसेंच अशौचही तत्क्षणीं समाप्त होतें अशी शास्त्रमर्यादा आहे. [अध्याय ५।९८.] ९. चार समुद्रांपासून. [स० ११२ श्लो० १४.]

जलैः प्लवंग **म** श्रेष्ठैरानीतैस्तं बिभीषणम् ।
अभ्यषिंचत्प्रसन्नात्मा लक्ष्मणः परमासने. ॥ ८९७

अथा[1]द्भुतैक **श्री** रामः प्रभुर्मारुतिमब्रवीत् , ।
'बिभीषणमनु[2]ज्ञाप्य कुशलं पृच्छ जानकीम्. ॥ ८९८

वैदेह्या वान **रा** धीशं कुशलं लक्ष्मणं च माम् ।
आचक्ष्व वदतां श्रेष्ठ! रावणं च हतं रणे. ॥ ८९९

प्रियमुक्त्वा स **म** ग्रं त्वं ततस्तस्या हरीश्वर! ।
प्रतिगृह्य च [3]संदेशमुपावर्तितुमर्हसि.' ॥ ९००

इत्युक्तो वायु **ज** स्तेन रामेणाक्लिष्टकर्मणा ।
तां [4]पुष्पवाटिकां गत्वा सीतां नत्वेदमब्रवीत्. ॥ ९०१

'कुलशं [5]त्वाह **य** स्तेऽतिप्रियः श्रीरघुसत्तमः ।
गतं रक्षो लयं देवि! भास्करेणेव तत्तमः. ॥ ९०२

प्रियमाख्यामि **रा** ज्ञि! त्वां [6]भूयोभूयः [7]संभाजये ।
रामस्याद्य प्रमुदिता देवर्षीणां सभा [8]जये. ॥ ९०३

[9]प्रभावात्ते सु **म** हिते रावणो निहतो रणे ।
[10]बिभीषणसहायेन रामेणाद्भुततेजसा. ॥ ९०४

स दक्षिणो भु **ज** स्तस्य रामस्य कुशली सति! ।
लक्ष्मणः सुमहातेजाः सुग्रीवश्च महामतिः. ॥ ९०५

लब्धोऽयं विज **य** [11]स्तेजो रामेण [12]ख्यापितं महत् ।
लंका [13]वशीकृता सीते! स्वस्था भव [14]गतज्वरा.' ॥९०६

सीतोवाच नि[15] **ज** स्वांतप्रियं श्रुत्वानिलात्मजम् ।
तूष्णींभूता क्षणं पश्चत्तेन संप्रार्थिता सती. ॥ ९०७ ॥

'[16]वत्साख्यातुः प्रि **य** स्यास्य भवतो हितकारिणः ।

---

१. अद्भुता अत एव अनुपमा श्रीर्यस्य सः. २. आज्ञा घेऊन, कळवून. 'पुराधिपतित्वात् कर्तव्येऽर्थे तदनुज्ञापेक्षणम्.' [स० ११२ श्लो० २२-२५.] ३. प्रतिसंदेशम् । उलट निरोप. ४. पुष्पोद्यानांत, फूलबागेंत. ५. त्वां आह. ६. पुनः पुनः किंवा अतिशयित. ७. प्रीणयामि । आनंदितांतःकरण झालों आहें. ८. रामस्य जये—असा अन्वय. ९. पातिव्रत्यवैभवात्. [स० ११३ श्लो० ७-१३ पहा.] १०. बिभीषणः सहायो यस्य तेन. ११. वीर्यम्, पराक्रमः. १२. गाजविलें. १३. अवशावशा कृता. १४. गतः (नष्टः) ज्वरः (संतापः) यस्याः सा । मनःपीडारहिता नष्टाधिर्वा सती. १५. आपल्या मनांतील आवडती गोष्ट. निजं स्वांतं (मनः) तस्य प्रियं वस्तु. १६. हे वत्स, आख्यातुः सदृशम् (प्रिय कळविणाऱ्याला अनुरूप). [स० ११३ श्लो० १७-२०.]

देयं वस्तु न पश्यामि सदृशं किंचिदप्यहम्.' ॥ १०८

हनुमानाह **रा** ज्ञीं तां प्रांजलि'र्देवि! वत्सले! ।
स्निग्ध[1]मेवंविधं[2] वाक्यं त्व[3]मेवार्हस्यनिंदिते! ॥ १०९

एतदेव म **म** श्रेयः प्रियं भर्तृहिते रते ।
लब्धं सर्वं मया श्रुत्वा वाक्यमेतत्तवामृतम्. ॥ ११०

देयो वरोऽद्य **श्री** मत्या मातर्यः प्रार्थ्यते मया ।
श्रोतुमर्हसि तं देवि! वि[4]श्वविख्यातसद्व्रते! ॥ १११

इमास्तु खलु **रा** क्षस्यो यदि त्वमनुमन्यसे ।
हंतुमिच्छामि ताः सर्वा याभिस्त्वं तर्जिता पुरा.' ॥ ११२

जानक्युवाच, '**म** तिमन्! कुर्वतीनां प[5]राज्ञया ।
विधे[6]यानां च दा[7]सीनां कः कुप्येद्वानरोत्तम!' ॥ ११३

इत्युक्तो वात **ज** स्तुष्टस्तामुवाच यशस्विनीम्, ।
'युक्ता रामस्य भवती धर्मपत्नी[8] गु[9]णान्विता ॥ ११४

वैदेहि! हृद **य** स्थं यत्[10] त्त्वं[11] त[12]त्त्वं मनस्विनि! ।
[13]'प्रतिसंदिश मां देवि! गच्छेयं यत्र राघवः.' ॥ ११५

एवमुक्ता न **रा** धीशसुता सीता हनूमता ।
साब्रवी'द्दृष्टुमिच्छामि भर्तारं भक्तवत्सलम्.' ॥ ११६

हनूमान्राम **म** हिषीमुवाच प्रांजलिस्तदा, ।
'पूर्णचंद्रमुखं रामं द्रक्ष्यस्यद्य सलक्ष्मणम्.' ॥ ११७

[14]एवमुक्त्वा भ्रा **ज** मानां सीतां साक्षादिव श्रियम् ।
आजगाम महातेजा हनूमान्यत्र राघवः. ॥ ११८

तस्याः सोऽकथ **य** त्सर्वं राघवायोत्तरं वचः ।
स्वयं चोवाच शोकार्ता द्रष्टुमर्हसि तामिति. ॥ ११९

---

१. प्रेमयुक्तम्, स्नेहयुक्तम्. २. अशक्यप्रीतिदानमित्येवंरूपम्. ३. भाषितुमर्हसि. ४. विश्वे विख्यातं सत् (शोभनं) व्रतं यस्याः तत्संबुद्धौ हे विश्वविख्यातसद्व्रते. ५. दुसऱ्याच्या आज्ञेनें. ६. स्वामीच्या आज्ञेप्रमाणें वागणें ज्यांना आवश्यक आहे अशा दासींवर. [स० १३३ श्लो० ३६-३७.] ७. संबंधविवक्षया षष्ठी । 'क्रुधद्रुह–' इत्यादिना (१।४।३७) षष्ठी एव युक्ता. ८. धर्मस्य पत्नी । अश्वघासादिवत् समासः। 'चतुर्थी तदर्थार्थ–' इत्यादि २।१।३६. तदर्थेन प्रकृतिविकृतिभाव एव. ९. गुणैरन्विता, गुणयुक्ता. १०. यत् तत्त्वं (वस्तु). ११. तत् त्वम् (तूं.) १२. धीरोन्नतचित्ते. १३. परत कांहीं निरोप सांग. १४. हा श्लोक मूळांत बहुतेक असाच आहे. [सर्ग १३ श्लो० ५०.]

एवमुक्तस्त्रि **ज** गतां नाथो धर्मभृतां[1] वरः ।
आगच्छत्सहसा ध्यानमीषद्बाष्पपरिप्लुतः[2][3]. ॥ ९२०

'तामुपस्थाप[4] **य** क्षिप्रं **सी**तां स्नातामलंकृताम्' ।
**बि**भीषणमिति श्रीमानुवाच **र**घुनायकः. ॥ ९२१

आरोप्य प्रव **रा** मार्यां शिबिकां तां **बि**भीषणः. ।
नाययामास[5] सुस्नातां प्रीतां **सी**तां स्वलंकृताम्[6]. ॥ ९२२

तदा प्लवंग **म** क्षांस्तान्वारितान्[7]वेत्रपाणिभिः[8] ।
दृष्ट्वा, **बि**भीषणं **रा**मो मैवमित्यब्रवीत्क्रुधा. ॥ ९२३

अथाह **रामः श्री** मांस्तां विनीतां पार्श्वमागताम्, ।
'पौरुषाद्यदनुष्ठेयं मयैतदुपपादितम्[9]. ॥ ९२४

निर्जितासि[10] वं **रा** रोहे! शत्रुं जित्वा रणाजिरे ।
परिश्रमोऽयं वृत्तार्थं[11], न त्वदर्थं मया कृतः. ॥ ९२५

प्राप्तसंदेह[12] **म** हिमा मम प्रतिमुखे[13] स्थिता ।

---

१. धार्मिकेषु श्रेष्ठः. २. परगृहीं राहिलेल्या स्त्रीचा स्वीकार निःशंकपणें केल्यानें लोक नांवें ठेवतील व ती निर्दोष असल्यास त्याग केल्यानें महा दोष पदरीं येईल यासंबंधानें रामाला चिंता लागली. चिंतेचें खरें कारण मुख्य सीतालाभ कसा होईल हें होतें. रावणाच्या घरीं छायासीता होती. सीतेनें आपलें खरें रूप अग्नींत ठेवलें होतें हें सीताहरणप्रसंगाच्या श्लोकांच्या टीपेंत मागें सांगितलेंच आहे. ३. किंचित् बाष्पपर्याकुल झालेला. [स० ११४ श्लो० ५-३०.] ४. जवळ आणवा. ५. 'नाययामास' या कल्पित पाठाचे जागीं 'नयामासत' असा पाठ होता तो अशुद्ध आहे. नेववितां झाला. ६. सु+अलंकृताम्. ७. दूरमुत्सारितान्. ८. बिभीषणाच्या चोपदारांनीं. सीता आली असें जेव्हां बिभीषणानें रामाला कळविलें तेव्हां रामानें आज्ञा केली कीं, 'वैदेही संनिकर्षे मे क्षिप्रं समभिगच्छतु.' सीता रामाला भेटेल त्या वेळीं तेथें इतक्या मंडळीनें राहूं नये अशी बिभीषणाची समज होऊन त्यानें वानरांना दूर मागें हटविलें हें पाहून रामाला राग आला व बिभीषणाला म्हणाला, 'न गृहाणि न वस्त्राणि न प्राकारस्तिरस्क्रिया (आवरणम्)। नेदृशा राजसत्कारा [जनापसरणादिव्यापाराः] वृत्तमावरणं स्त्रियः ॥ व्यसनेषु न कृच्छ्रेषु न युद्धेषु स्वयंवरे । न क्रतौ नो विवाहे वा दर्शनं दूष्यते स्त्रियः ॥ सैषा विपद्गता चैव कृच्छ्रेण च समन्विता । दर्शने नास्ति दोषोऽस्या मत्समीपे विशेषतः ॥ विसृज्य शिबिकां तस्मात्पद्भ्यामेवापसर्पतु । समीपे मम वैदेहीं पश्यंत्वेते वनौकसः॥' [सर्ग ११४ श्लो० २७-३०.] ९. शौर्यानें जें करण्यासारखें होतें तें म्यां केलें. [सर्ग ११५ श्लो० ३-२४.] १०. नितंबिनि! ११. शत्रुकृतस्वदारणामुळें आलेल्या मलीनतेला धुवून वीरता दाखविण्यासाठीं, वीर आहें ही कीर्ति राखण्याकरितां. १२. वा० रामायणांतील 'प्राप्तचारित्रसंदेहा' हा पाठ बरा दिसतो. १३. संमुखे.

दीपो नेत्रा[१]तुरस्येव प्रति[२]कूलासि मे दृ[३]ढा. ॥ ९२६

तद्गच्छ त्वं रा **ज** कन्ये! य[४]थेष्टं वि[५]वृता दिशः ।
कः क[६]विः पुनरादद्यात्स्त्रियं परगृहोषिताम्? ॥ ९२७

लक्ष्मणे वाँत्या[७] **य** ताक्षि! भरते वा नरोत्तमे ।
शत्रुघ्ने वा गुणाढ्ये त्वं कु[८]रु बुद्धिं यथासुखम्. ॥ ९२८

सुप्रिये वा[९]न **रा** धीशे राक्षसे वा बिभीषणे ।
निवेशय मनः सीते! यथा वा[१०] सुखमात्मनः. ॥ ९२९

न त्वां दशास्यो **म**[११] हिलां दिव्यरूपां बलाद्धृताम् ।
मर्षयेत्सुचिरं सीते! स्वगृहे [१२]पर्यवस्थिताम्.' ॥ ९३०

अत्यप्रियं रा **ज** कन्या तदुपश्रुत्य सा प्रियात् ।
रुदती सुदती सीता भर्तारमिदमब्रवीत्. ॥ ९३१

'किमेवं हृ[१३]दं **य** च्छेदि प्रभो! मां श्रोत्र[१४]र्दारुणम् ।
रूक्षं श्रावयसे वाक्यं प्राकृतः प्राकृतामिव? ॥ ९३२

न तथास्मि, नि **ज** स्वांते यथा मामवगच्छसि, ।
प्रत्ययं गच्छ मे, स्वेन चा[१५]रित्रेण शपे स्वयम्. ॥ ९३३

---

१. नेत्ररोगिणः. २. अप्रिया. ३. अतिशयेन. 'दृढम्' असा पाठ बरा दिसतो. ४. मर्जी असेल त्याप्रमाणें ५. मोकळ्या. ६. शहाणा. ७. वा अत्यायताक्षि. ८. आमच्या आप्तांपैकीं कोणाजवळ राहून आयुष्याचे दिवस घालीव. जनापवादामुळें सीतेचा स्वीकार राम करीना व व्यभिचारिणी स्त्री असली तरी त्या स्त्रीच्या पतीनें तिला अन्नवस्त्र पुरविलें पाहिजे असा धर्मशास्त्राचा नियम आहे, कारण घटस्फोटाचा प्रकार शास्त्रांत सांगितला नाहीं, यासाठींच रामानें सीतेला आपल्या आप्तांकडे राहावयास सांगितलें. याज्ञवल्क्यस्मृतींत सांगितलेला उपाय 'व्यभिचाराद्दतौ शुद्धिर्गर्भे त्यागो विधीयते' रामाला आवडला नाहीं असें दिसतें. ९. सुग्रीवे. १०. स्वमातृपितृकुले वा. ११. महिला, दिव्यरूपा, इत्यादि पदें, रावणाला पापबुद्धि अवश्य झाली असेल, हें दाखविण्याकरितां योजिलीं आहेत. १२. पंतांनीं अन्यत्र वर्णन केलें आहे तें असें:— जनसंग्रहार्थ तो श्रीराम प्रभु कपटमानव सतीस । बोले, 'विलोकितों तुज जरि तूं परमंदिरीं न वसतीस. ॥ रिपु मारुनि सोडविलें कीर्त्यर्थंचि तुज, न देवि! भोगाया, । कीं नमुनि ईश्वराला 'यशचि' म्हणति सुजन 'दे विभो! गाया.' ॥ परकरग स्वकलत्र स्पर्शेंचि महायशासि वाहवितें । कोण प्राज्ञ म्हणेल श्वा शिवला ज्या तशा शिवा हवितें? ॥ जा स्वैर, म्हण, स्त्रीच्या सुखदे हो सुप्रसन्न मोकळिके! । जी चुंबिली भुजंगें मधुप म्हणेलचि तिला 'नमो कळिके!' ॥ [काव्यसंग्रहग्रंथमाला–मोरोपंत–वनपर्व–अ० १२ गी० ८५-८८ पृ० १८३.] १३. हृदयं छिनत्ति इति मर्मच्छेदि. १४. कर्णकटु. [सर्ग ११६ श्लो० ४-१६.] १५. पातिव्रत्यलक्षणेन चारित्रेण.

[1]अन्यासामन **य** ज्ञत्वाज्ज्ञातिं त्वं परिशंकसे ।
त्यज शंकां, परस्पर्शे [2]कामकारो न मे प्रभो ! ॥ ९३४

शरीरेऽत्र प **रा** धीने किं करिष्याम्य[3]नीश्वरी ? ।
मदधीनं तु यत्तन्मे हृदयं त्वयि वर्तते. ॥ ९३५

[4]निपीडितो म **म** करो न प्रमाणीकृतस्त्वया ।
न मे भक्तिर्न मच्छीलं, सर्वं ते पृष्ठतः कृतम्.' ॥ ९३६

सैवं तदोक्त्वा **श्री** मंतं लक्ष्मणं दीनमानसम् ।
उवाच, 'व्यसनस्यास्य [5]भेषजं कुरु मे चिताम्. ॥ ९३७

त्यक्ता देवर! **रा** ज्ञाहमप्रीतेन गुणैर्मम ।
मि[6]थ्यापवादोपहता निवे[7]क्ष्ये [8]हव्यवाहनम्.' ॥ ९३८

प्राप्तो वशमें **म** [9]र्षस्य स विज्ञाय प्रभोर्मतम् ।
चितां चकार **सौ**मित्रिः [10]परवान्भृशदुःखितः. ॥ ९३९

नहि **रा**मं [11]ते **ज** सोग्रं तदा कश्चिद्यमोपमम् ।
[12]अनुनेतुमथो वक्तुं द्रष्टुं वा[13]प्यशकत्सुहृत्. ॥ ९४०

अधोमुखं प्रि **य** तमं **रा**मं कृत्वा प्रदक्षिणम् ।
बद्धांजलिः सती **सी**ता साब्रवीदग्निसंनिधौ. ॥ ९४१

'[14]यथा मनो मे **रा** जेंद्रान्नापसर्पति **रा**घवात् ।
तथा सर्वस्य साक्षी मां सर्वतः पातु पावकः. ॥ ९४२

---

१. सामान्य स्त्रियांची अनयज्ञता पाहून सर्व स्त्रीजातीची शंका आपणांला येते. २. इच्छापूर्वकता. ३. असमर्था. ४. विवाहकालीं केलेलें पाणिग्रहण, किंवा माझी भक्ति, किंवा माझें शील, हें प्रमाण धरलें नाहीं. सीता म्हणते कीं माझें शील, भक्ति, व पाणिग्रहण त्या गोष्टी माझ्या शुद्धाचाराची पूर्ण साक्ष देतात, त्या आपण प्रमाण धरल्या नाहींत. ५. औषधम्. (आपत्तिरूप रोगापासून मुक्त होण्याकरितां.) ६. मिथ्या+अपवाद+उपहता=लोकांच्या खोट्या निंदेनें नाश पावलेली. ७. प्रवेश करीन. ८. हव्यं वहति इति हुतवहः, अग्निः. ९. क्रोधस्य. १०. परतंत्रः पराधीनः. ११. तेजसा उग्रम्. १२. विनंति करून मन वळविण्याला. १३. अ+शक्+लुङ्त्. १४. या प्रसंगास अनुलक्षून पंत म्हणतात:—'जेंवि व्यसनीं त्रिजगन्नाथ स्मृतिचा धरी करीश पथ, । ती तेंवि सत्यधर्मस्मरणपरा जानकी करी शपथ. ॥ चुकलें असेल तिळभरि तरि शापावें मला सतीव्रातें. । भुजगीतें कीं तुमच्या भुजभुजगातें शिवेन तीव्रांतें. ॥ स्वप्नींहि तुम्हाहुनि परपुरुषीं गेलें असेल हें मन, हो! '। तरि युष्मच्चरणरजःस्पर्शें मद्देहलोह हेम न हो. ॥ मळलें असेल हृदय स्वसतीव्रतनियमलेशभंगोहें । प्रभुजी! तरि मन्मस्तक आतांचि तुम्हांसमक्ष भंगो हें.' ॥ [काव्यसंग्रहग्रंथमाला—मोरोपंत—वनपर्व—अध्याय १२ गीति ९३-९६ पृ० १८४.]

यद्यहं शुद्धि **म** त्यस्मि [१]श्रीमद्रामैकमानसा ।<br>
केशवस्त्रादिकमपि [२]माधाक्षीन्मम पावकः.' ॥ ९४३

एवमुक्त्वा [३]गं **ज** गतिः परिक्रम्य हुताशनम् ।<br>
**सी**ता विवेश ज्वलनं निःशंकेनांतरात्मना. ॥ ९४४

महान् [४]जनोच **य** स्तत्र ददर्शाश्रुसमाकुलः ।<br>
[५]प्रविशंतीं सतीमग्निं दीप्तं सौ[६]दामनीमिव. ॥ ९४५

ददृशुस्तां रा **ज** कन्यां प्रविशंतीं हुताशनम् ।<br>
ऋषयो देवगंधर्वाः पूर्णाहुतिमिवाध्वरे. ॥ ९४६

प्रचुक्रुशुः स्त्रि **य** स्तास्तां दृष्ट्वा दीप्ते चितानले ।<br>
पतंतीं संस्कृतां मंत्रैर्वसो[७]र्धारामिव क्रतौ. ॥ ९४७

रक्षसां वान **रा** णां च 'हाहे'ति विपुलः स्वनः ।<br>
तस्यामग्निं संविशंत्यां संबभूवाद्भुतोपमः. ॥ ९४८

ततो **राम**ः [९]का **म** खिन्नः श्रुत्वैवं वदतां गिरः ।<br>
[१०]दध्यौ मुहूर्तं धर्मात्मा बाष्पव्याकुललोचनः. ॥ ९४९

**श**क्रो **य**मोऽथ **श्री** दश्च **शं**भुर्ब्रह्मा सुरैः सह ।<br>
**लं**कां विमानैरागत्य तेऽभिजग्मू **र**घूत्तमम्. ॥ ९५०

अब्रुवंस्तं सु **रा रा**मं प्रांजलिं पुरतः स्थितम्, ।<br>
'विश्वस्य कर्तास्यात्मानं कथं त्वं नावबुध्यसे? ॥ ९५१

**सी**ता तवेयं **म** हिषी साक्षाच्छ्री**ज**नकात्मजा ।<br>
उपेक्षसे कथं **वि**ष्णो! पतंतीं हव्यवाहने? ॥ ९५२

---

१. श्रीमति रामे एकं (अविभक्तं) मानसं यस्याः सा. २. मा+अदह्+सीत् लुङ्= भस्म न करो. [स० ११६ श्लो० २५-२६.] ३. गजस्येव गतिर्यस्याः सा करिगमना, हत्तीप्रमाणें जिचें मंदमंद डुलत चालणें आहे अशी. ४. जनसमूहः. ५. या प्रसंगाचें वर्णन **पं**तांनीं प्राकृतमंत्ररामायणांत फार सुंदर केलें आहे:–'जाणों विरहमयाग्नी क्षितितनयेला असह्य तो जाळी; । तापें ताप हरावा, म्हणउनि अनलीं प्रवेशती झाली. ॥ हेमांबुजिनी श्रीमत्सरस्वतीच्या हृदीं तसी साजे; । ज्वलनाधिदेवता कीं, त्रिलोकपूज्या जगन्निवासा जे. ॥ कीं स्वच्छपद्मरागग्रावविरचितालवाल हेमलता । माणिक्यदर्पणांत स्वः-स्त्रीप्रतिबिंब हें म्हणो भलता. ॥ [काव्यसंग्रहग्रंथमाला–रामायणें–भाग १–मंत्ररामायण–युद्धकांड–गीति ७४१-७४३ पृ० १५३.]६. विद्युल्लतामिव. ७. संततां घृतधाराम्. ८. उपमाश्चर्यमित्युपमाशार्म यत्प्रवृत्तौ सः. [स० ११६ श्लो० २७-३४.] ९. कामं (निकाममतिशयेन वा) २ यथा तथा खिन्नः. १०. किमुक्तं किं कृतं किंचातःपरं कर्तव्यमिति चिंतापरो बभूव. [सर्ग ११७ श्लो० १.]

अस्माभिस्त्वं त्रि **ज** गतां भर्ता हंतुं **द**शाननम् ।
प्रार्थितो मानुषीं योनिं प्रविष्टोऽसि सनातनः. ॥ ९५३

प्रभव[1]श्चाप्य **य** श्च त्वं देवकार्यं कृतं त्वया ।
सर्वे कृतार्थास्त्वद्भक्ताः शरण्यस्त्वं **ज**नार्दन !' ॥ ९५४

गृहीत्वा तां व **रा** रोहां मूर्तिमान् हव्यवाहनः ।
उत्थायाभ्येत्य भगवानित्युवाच **र**घूत्तमम्. ॥ ९५५

'राम! रामा[2]च्छ **म** नसं **सी**तां [3]शीतांशुजिन्मुखीम् ।
गृहाण त्वमिमां मान्यां मान्यां बुद्धिं कुरु प्रभो !' ॥ ९५६

एवमुक्त्वा रा **ज** मानां सीतां **दा**शरथेः प्रभोः ।
स्थापयामास वामे तामंके [4]पंकेरुहेक्षणाम्. ॥ ९५७

'लोकापवादो **य** शसो नाशकोऽतस्तमागतम् ।
परिमार्ष्टुमिदं दि[5]व्यं मया विज्ञाय कारितम्. ॥ ९५८

इयं विशुद्धा **ज** गति श्रेष्ठा भानोरिव प्रभा, ।
न विहातुं मया शक्या कीर्तिरात्मवता यथा. ॥ ९५९

[6]सुस्निग्धानां सु **य** शसां नाथानां वदतां हितम् ।
अवश्यं च मया कार्यं सर्वेषां वो वचः प्रियम्.' ॥ ९६०

एवमुक्त्वा स **रा** जेंद्रः प्रियां स्वीकृतवान्मुदा. ।
ततः शुभतरं वाक्यं व्याजहार **म**हेश्वरः. ॥ ९६१

'पु[7]ष्कराक्ष! स[8] **म** र्थेश! [9]श्यामतामरसप्रभ! ।
दिष्ट्या कृतमिदं कर्म त्वया धर्मभृतां वर! ॥ ९६२

---

१. प्रभवः=सृष्टिः, अप्ययः=प्रलयः । तत्कारणत्वात्तद्व्यपदेशः. २. अच्छं (निर्मलं) मनो यस्यास्ताम्. ३. शीता अंशवो यस्य स शीतांशुश्चंद्रः । तं जयति इति शीतांशुजित् । तद्विधं मुखं यस्यास्ताम्. ४. पंके रोहति इति पंकेरुहं कमलम् । पंकेरुहवत् ईक्षणे यस्यास्ताम्. ५. अति प्राचीनकाळीं कोणावर अपराध केल्याचा दोष आला तर त्या मनुष्याला आपली निर्दोषता ठरविण्याकरितां तापलेल्या लोखंडाला स्पर्श करावा लागत असे किंवा तापलेल्या पा[illegible]यांत हात बुडवावा लागे. दुखापत न झाल्यास त्या मनुष्याला निर्दोष समजत. निर्दोषता सि[illegible] करण्याच्या या प्रकाराला 'दिव्य' ही संज्ञा होती. सीतेचें अग्निदिव्य फार भयंकर होतें. य[illegible] इंग्रजींत fire ordeal असें म्हणतात. ६. स्नेहवताम्. ७. हे कमलाक्ष. ८. हे समर्थ, हे [illegible]. ९. 'पुष्कराक्ष' हें संबोधन आहेच. तेव्हां 'श्यामतामरसप्रभ' असें संबुद्धिपद करणें बरें [illegible] दिसतें. श्यामतामरसस्येव प्रभा यस्य सः.

आश्वास्य दीनं **श्री** मंस्त्वं भरतं भक्तमात्मनः ।
मातृंश्च राज्यं कृत्वाथ स्वपदं गंतुमर्हसि. ॥ ९६३

विमानेऽयं  ने **रा** धीशः पिता दशरथस्तव ।
लक्ष्मणेन सह भ्रात्रा त्वमेनमभिवादय. ॥ ९६४

शक्रस्य लोकं **मं** र्त्येंद्रो गतो मतिमतां वरः ।
सत्पुत्रेण त्वया राम! तारितोऽयं गुरुस्तव.' ॥ ९६५

राघवः सानु **ज** श्चक्रे नमनं पितुरात्मनः ।
स चैनमंक आरोप्य परिष्वज्य मुदाब्रवीत्. ॥ ९६६

'राम! प्राणप्रि **य!** स्वर्गः समानोऽपि सुरर्षभैः ।
न मे बहुमतो जातु त्वां विना गुरुवत्सल! ॥ ९६७

कैकेय्या यानि **रा** जीवनेत्र! प्रोक्तानि दुष्टया ।
तानि वाक्यानि शल्यानि स्थितानि हृदये मम. ॥ ९६८

दुःखान्मुक्तोऽद्य **म** हतस्त्वां परिष्वज्य सानुजम् ।
तारितोऽहं त्वया पुत्र! सुपुत्रेण महात्मना.' ॥ ९६९

रामः प्रोवाच **ज** नकं, 'कैकेय्या भरतस्य च ।
प्रसादं कुरु, शापः स सपुत्रां न स्पृशेत्प्रभो!'॥ ९७०

तथेत्युक्त्वा प्रि **य** गुणं लक्ष्मणं तां च जानकीम् ।
समाश्वास्य, विमानेन ययौ स्वर्गं महायशाः. ॥ ९७१

ततो जयंत **ज** नको रामं प्रांजलिरब्रवीत्, ।
'अमोघं दर्शनं राम! तवास्माकं रघूत्तम! ॥ ९७२

प्रीताः स्मो, ब्रूहि **य** त्प्राज्यं राजेंद्र! मनसेप्सितम्.' ।
तच्छ्रुत्वा वासवं हृष्टो वचनं प्राह राघवः. ॥ ९७३

'मम हेतोः प **रा** क्रांता ये गता यमसादनम् ।
ते सर्वे जीवितं प्राप्य समुत्तिष्ठंतु वानराः. ॥ ९७४

अकाले चापि **म** धुराः फलमूलसमृद्धयः ।
नद्यश्च विमलास्तत्र तिष्ठेयुर्यत्र वानराः.' ॥ ९७५

---

१. त्रिदिवं ब्रह्मलोकम्. २. पुरःस्थस्यापि देवदेहपरिग्रहेण अज्ञायमानतया अंगुल्या निर्देयणाः. ३. मर्त्येशः. ४. अंके. ५. सुरर्षभैः समानोऽपि स्वर्गो न बहुमतः इत्यन्वयः. ६. 'तुझा आणि मी पुत्रासह त्याग करतों' असा दशरथानें कैकेयीला दिलेला शाप. [स० ११९ श्लो० १९-२५.] ७. इंद्रः. ८. कृतपराक्रमाः. ९. सर्ग १२० श्लो० २-१० पहा.

रक्षःक्षयात्त **श्री** रिंद्रः प्रत्युवाच तदा प्रभुम्, ।
'महानयं वरस्तात! त्वयोक्तो रघुसत्तम! ॥ ९७६

मम त्वयि प **रा** प्रीतिस्तस्मादेतद्भविष्यति. ।
समुत्तिष्ठंतु सर्वे ते ये हता युधि राक्षसैः.' ॥ ९७७

ततः प्लवंग **म** व्रातास्ते सुप्त्वेव समुत्थिताः ।
बभूवुर्वानरा ऋक्षाः किं न्वेतदिति विस्मिताः. ॥ ९७८

राममापृच्छय **ज** ग्मुस्ते स्वर्गं सेंद्रा दिवौकसः. ।
श्रीरामं प्रार्थयामास सत्कर्तुं स बिभीषणः. ॥ ९७९

तेमाह रामो, '**य** दि मां राजन्! सत्कर्तुमिच्छसि ।
हरीन्सुग्रीवमुख्यांस्त्वं सर्वानप्यद्य सत्कुरु. ॥ ९८०

स तु ताम्यति **रा** ज्येऽपि भरतो मत्कृते सदा ।
तं विना मे बहुमतं न स्नानं वस्त्रभूषणम्. ॥ ९८१

एतत्त्वं पश्य **म** तिमन्! यथा क्षिप्रं निजां पुरीम् ।
प्रतिगच्छामि, मार्गोऽयं राजन्! परमदुर्गमः.' ॥ ९८२

दशकंठानु **ज** स्तं स प्रत्युवाच कृतांजलिः, ।
'अन्हा त्वां प्रापयिष्यामि साकेतं पुष्पकेण तत्. ॥ ९८३

अनुग्रहस्ते **य** द्यस्ति सदारः सानुजो वस ।
गृहाण सत्क्रियां मत्तः, सौहृदं तव चेन्मयि.' ॥ ९८४

तत्कौसल्यात्म **ज** स्तस्य श्रुत्वा वाक्यं ततोऽब्रवीत्, ।
'साचिव्येन तथा प्रेम्णा पूजितोऽहं भृशं त्वया. ॥ ९८५

भरतं तु प्रि **य** सखं द्रष्टुं मे त्वरते मनः ।
शिरसा याचतो यस्य न कृतं वचनं मया. ॥ ९८६

कौसल्यां च प **रा** मार्तां सुमित्रां केकयात्मजाम् ।
गुहं च सुहृदं पौरान्द्रष्टुं मेऽत्युत्सुकं मनः. ॥ ९८७

अनुजानीहि **म** तिमन्! मामहं सत्कृतस्त्वया ।
उपस्थापय मे शीघ्रं विमानं राक्षसेश्वर!' ॥ ९८८

स तद्विमानं **श्री** दस्य कामगं रावणाहृतम् ।

१. रक्षसां क्षयस्तेन आप्ता श्रीर्येन सः. २. या प्रसंगाचें वर्णन फार मनोहर आहे. मंत्ररामायण–युद्धकांड–गी० ७६३-७६६ पहा. ३. सर्ग १२१ पहा. ४. प्रसादः, कृपा. ५. मंत्रसाहाय्येन. ६. सर्ग १२१ श्लो० १७-२२ पहा. ७. या विमानाचें वर्णन पहा. (स० १२१ श्लो० २३-२९.)

स्थापयामास सेवायां सुरतः पुरतः प्रभोः. ॥ ९८९

ससैन्यं **वान रा** धीशं संपूज्य परया मुदा,।
'**सा**केतं मां नये'त्याह **राम**ं भक्तो **बि**भीषणः.॥ ९९०

सोऽपि प्लवंग **म** पतिः **सु**ग्रीवो मंत्रिभिः सह।
तथैव प्रार्थयामास प्रभुं प्राज्यदयं स्वयम्. ॥ ९९१

तद्विमानं भ्रा **ज** मानं राजराजस्य **रा**घवः।
ताभ्यां सह समारुह्य राजभ्यां कपिरक्षसाम्. ॥ ९९२

**त्रि**कूटात्तं प्रि **य** तमामंके कृत्वा सलक्ष्मणः।
प्रतस्थे सुमहातेजा लंकालंकारजित्पुरम्. ॥ ९९३

**कै**लासशिख **रा** कारे **त्रि**कूटशिखरे स्थिताम्।
**लं**कां युद्धधरां **रा**मो दर्शयन्नाह **जा**नकीम्. ॥ ९९४

'प्रिये! पश्य त्व **म** स्याद्रेस्त्रिकूटस्य शिरोगताम्।
सुरैर्दुरासदां **लं**कां निर्मितां **वि**श्वकर्मणा. ॥ ९९५

इयं युद्धस्य **ज** गती, त्वत्कृतेऽत्र सह प्रियैः।
सचिवैर्भ्रातृभिः पुत्रैः **सी**ते! **द**शमुखो हतः. ॥ ९९६

**रा**वणस्य स्त्रि **य** स्तत्र **मं**दोदर्या सह प्रिये!।
विविधं भूरिकरुणं तं मृतं पर्यदेवयन्. ॥ ९९७

सेतु**र्न**लेन **ज** लधावेष देव्याज्ञया मम।
तव हेतोर्विशालाक्षि! बद्धः पश्य सुदुष्करः. ॥ ९९८

पश्य **सी**ते!ऽत्या **य** ताक्षि! दुस्तरं **व**रुणालयम्।
जंतवो यत्र पतितं नयंत्यकरुणालयम्. ॥ ९९९

इतस्त्वं रुचि **रा** पांगे! **मै**नाकं पश्य पर्वतम्।
विश्रामार्थं **ह**नुमतो भित्त्वा सागरमुत्थितम्. ॥ १०००

उत्तरं तीर **म** स्याब्धेरेतद्देवि! मनोरमम्।

---

१. अति अनुरक्त असलेला. २. प्राज्या (प्रचुरा) दया यस्य तम्. ३. यक्षाधिपस्य. राज्ञां (यक्षाणां) राजा (प्रभुः)=कुबेरस्तस्य. ४. लंकेला अलंकाराप्रमाणें शोभविणारा (रावण) त्याला जिंकणारा. लंका+अलंकार+जि+त्+क्विप्. ५. युद्धभूमिम्. ६. शिखरे स्थिताम्. ७. त्याकरितां. ८. न करुणा अस्त्यस्य इति अकरुणो यमः, तस्यालयम्. ९. हे सुंदरनेत्राच्या स्त्रिये.

अत्र पूर्वं महादेवः प्रसादमकरोद्विभुः. ॥ १००१

इदं तु तीर्थं श्री मद्यत्तीर्थमन्यत्ततोऽधिकम् ।
सेतुबंध इति ख्यातं भव्यं कव्यंचितं हितम्. ॥ १००२

अत्र राक्षस रा जोऽयं देव्यागच्छद्विभीषणः, ।
सुग्रीवस्य पुरी चैषा किष्किंधा वालिपालिता.' ॥ १००३

सीतोवाच, 'म म स्त्रीभिः सुग्रीवस्य महात्मनः ।
ताराप्रभृतिभिर्गंतुं सार्धमिच्छा पुरीं प्रभो !' ॥ १००४

एवमस्त्वित्यं ज कुलश्रेष्ठः प्रेष्ठं सतां प्रियाम् ।
उक्त्वोवाच तथा कर्तुं सुग्रीवं वानरेश्वरम्. ॥ १००५

स सुग्रीवः प्रि य तमां स्वयं तारां तथाब्रवीत् ।
तयाहूताः प्लवंगानां सर्वा भार्याः स्वलंकृताः. ॥ १००६

ताभिः सह त्व रा युक्ता पुष्पकं सारुरोह तत् ।
सीता तया कपींद्रस्य योषिता तोषिताभवत्. ॥ १००७

ततो रघूत्त म स्तत्र पुष्पके द्रुतगामिनि ।
वैदेहीमित्युवाचायमृष्यमूकः स भूधरः. ॥ १००८

---

१. सेतुमूले. २. सेतुबंधनात् पूर्वम्. ३. मत्स्थापितत्वेन अत्र. स्थितोऽभूत् । सेतोर्निर्विघ्नतासिद्ध्यै समुद्रप्रसादानंतरं शिवस्थापनं रामेण कृतमिति गम्यते. (स० १२३ श्लो० २०.) ४. अत्र स्थले महात्मनः सागरस्य तीर्थं सेतुनिर्माणमूलप्रदेशत्वात् सेतुबंध इति ख्यातं भविष्यति. ५. भावि, होईल. ६. पंडितैः पूजितम्. ७. दर्शनात् सर्वपापविशोधनम्. ८. सुग्रीवाची मुख्य नगरी किष्किंधा. येथेंच रामानें वालीला मारिलें. किष्किंधा जेथें होती तेथें हल्लीं अनागोंदी शहर आहे. हें तुंगभद्रेच्या कांठीं आहे. ९. सह. १०. अजाच्या कुलांतील श्रेष्ठ पुरुष. ११. अतिप्रिय. १२. सुषेणाची कन्या, वालीची पत्नी. वालीच्या मरणानंतर ही सुग्रीवाची स्त्री झाली. सुग्रीवाच्यां पहिल्या स्त्रीचें नांव रुमा. १३. सर्ग १२३ श्लो० ३४-३७ पहा. १४. 'सा समारुहत्' हा अपपाठ आहे, यास्तव 'सारुरोह तत्' असा पाठ कल्पिला आहे. १५. तोषः संजातोऽस्या इति. १६. या प्रसंगाचें वर्णन फारच हृदयद्रावक आहेः—कांतेसि म्हणे राघव, 'हा दिसतो ऋष्यमूकनाम नग; । तेथें मजला तूझे सुग्रीवें अर्पिले स्वकीय नग. ॥ ७८२ ॥ वाल्यनुजाचें मस्तक, येथें राज्याभिषेकनीरानें; । मेघें गिरिशिखर तसें, भिजवीलें या तुझ्याचि दीरानें ॥ ७८३ ॥ हे पंपा पुण्यजला, येथें तुजला स्मरोनि मी रडलों; । सौमित्र्यंकावरता, मुहूर्तपर्यंत कश्मलें पडलों. ॥ ७८४ ॥ निशिचरनायक येथें आला होऊनि दंभसंन्यासी; । तुज नेउनि मज दिधलें दुःख, जनीं जें असह्य अन्यासी. ॥ ७८५ ॥ ज्या स्थानीं रुचिराक्षी ! तूंचि उभी हें मनांत माजा ये; । आलिंगिले लताद्रुम, विद्रुमबिंबप्रभा-

त्वमानयाशु तां **म**[1] त्तस्तत्कृते[2]ऽहं **व**सुंधरे, ।
नो चेद्विनाशस्ते मत्तो[3] मत्तोषं[4] विनिहंसि यत्.'॥ ८४५

एवं क्रुद्धं प्रभुं **श्री** मानुवाच चतुराननः[5], ।
'[6]राम! **राम**! न संतापं कर्तुमर्हसि सुव्रत! ॥ ८४६

स्मर त्वं पूर्वकं[7] **रा** जन्! मंत्रं[8] भावमरिंदम[9]! ।
सुखेन नागलोकं[10] सा प्राप्ता **सी**ता तव प्रिया. ॥ ८४७

भूयः स्वर्गे संग **म** स्ते भविष्यति तया सह ।
शेषं भविष्यत्**का**कुत्स्थ! काव्यं **रामायणं** शृणु.॥ ८४८

महाकाव्यं तु रा **ज** र्षे! मया देवैः सह श्रुतम्.' ।
एवमुक्त्वा सुरैः सार्धं **ब्र**ह्मा स्वभवनं ययौ. ॥ ८४९

**रा**मो मुनिं विन **य** तः प्रार्थयामास सांजलिः ।
भगवन्! यद्भविष्यत्तच्छ्वोभूते[11] संप्रवर्त्यताम्[12]. ॥ ८५०

एवमुक्त्वा सदा **रा** ध्यः श्वोभूते मुनिभिः सह ।
तं जनौघं निर्वर्त्य[13]ागात्[14]पर्णशालां महामुनेः. ॥ ८५१

**कु**शीलवौ श्रोतु **म** नाः सोऽब्रवीद्**रा**घवः सुतौ ।
गीयतामविशंकाभ्यामिति **वा**ल्मीकिसंनिधौ. ॥ ८५२

तेषूपविष्टेषु **ज** गत्पूजितेषु महात्मसु ।
भविष्यदुत्तरं काव्यं जगतुस्तौ कुशीलवौ. ॥ ८५३

श्रुत्वा रहस्यं प्र **य** तैर्मुनिभिः सह **रा**घवः ।
ततो विसर्जयामास सर्वान्यज्ञागतान्नृपान्. ॥ ८५४

[15]यज्ञावसाने स्व **ज** नैः सहितः सकलैरपि ।

---

१. प्राप्तमोहः. २. तीच्याकरितां. ३. मजपासून. ४. मम तोषम्. मला संतोष देणारी गोष्ट. ५. चत्वार्याननानि यस्य सः चतुर्मुखः ब्रह्मा. ब्रह्मदेवाला पांचवें शिर होतें तें शिवगौरी-विवाहाचे वेळीं तोडलें गेलें असें शिवलीलामृतांत आहे. पांच मुखांचा हा ब्रह्मा कदाचित् कल्पांतरांत झाला असावा. ६. 'प्रसादने संभ्रमे च द्विस्त्रिरुक्तं न दुष्यति.' ७. पूर्वी केलेला. ८. देवैः सहावतारसमये कृतम् संकेतम् समयम् वा. ९. वैष्णवम् इत्यर्थः. १०. रसातलम्. ११. श्वोभाविनि आगामिनि दिवसे इत्यर्थः. १२. संप्रवर्तताम् असा पाठ वा० रामायणांत आहे. [सर्ग ९८ श्लो० २७.] १३. वा० रामायणांत 'विसृज्य' असा पाठ आहे. [स० ९८ श्लो० २८.] १४. यज्ञावसाने एव सीतांतर्धानात् ततः परं दीक्षितत्वाभावेन अन्यत्र गंतुं शक्यत्वात् वाल्मीकिपर्णशालां रामः प्राप्तवान्. १५. हें प्रकरण वाचतांना रघुवंश सर्ग १५ अवश्य पहावा.

एकाकिनमिवात्मानं मेने जनकजां विना. ॥ ८५५

यदा वियुक्तः प्र **य** यौ तया सद्गुणसंपदा[1] ।<br>
बभूव तत्स्मृतिस्तस्य सुधीरस्यापि[2] कंपदा[3]. ॥ ८५६

बभूव दुःखभा **रा** र्तः **सी**तां स्मृत्वा क्षणे क्षणे ।<br>
रामः[4] शून्यं जगन्मेने न शांतिं मनसागमत्[5]. ॥ ८५७

सर्वान्विसृज्य प्र **म** दां हृदि कृत्वानुजैः सह ।<br>
प्रविवेश ततोऽयोध्यां **रा**मो राजीवलोचनः. ॥ ८५८

न **सी**तायाः परां[6] **श्री** मान्वव्रे भार्यां **र**घूत्तमः ।<br>
यज्ञे यज्ञे च पत्न्यर्थं सैवाभूत्कांचनी प्रभोः. ॥ ८५९

धर्मेण **रा**घवो **रा** ज्यं चकार स महायशाः ।<br>
दशवर्षसहस्राणि[7] वाजिमेधानथाकरोत्. ॥ ८६०

चक्रेत्यद्भुत सा **म** र्थ्यात्ततो **द**शरथात्मजः ।<br>
वाजपेयान्[8] दशगुणांस्तथा बह्वासदक्षिणान्[9]. ॥ ८६१

अग्निष्टोमैश्च[10] ते **ज** स्वी सोऽतिरात्रैश्च **रा**घवः ।<br>
ईजे[11] क्रतुभिरन्यैश्च श्रीमान्बहुसुवर्णकैः. ॥ ८६२

सदैव धर्मे प्र **य** तमानस्यैवं धरापतेः ।<br>
स कालो व्यत्ययात्[12]तस्य **रा**घवस्य महात्मनः. ॥ ८६३

वानरास्तं महा **रा** जमृक्षा रात्रिंचराश्च ये ।<br>
सदानुरंजयंत्याज्ञानिरता **र**घुनंदनम्. ॥ ८६४

वृष्टिर्बभूव स **म** ये नाकाले निधनं[13] तदा ।<br>
हृष्टपुष्टजनाकीर्णं पुरं जनपदास्तथा. ॥ ८६५

अथ ता मातरो **ज** ग्मुः स्वर्गं **रा**मस्य सुव्रताः ।<br>
पुत्रपौत्रैः परिवृताः प्रापुर्**द**शरथं पतिम्. ॥ ८६६

---

१. सत्+गुण+संपद्+तृ०प्र०. सुगुणांची जी खनि तिच्याशीं. २. 'विकारहेतौ सति विक्रियंते येषां न चेतांसि त एव धीराः.' या कालिदासोक्तीचें स्मरण या प्रसंगीं सहज होण्यासारखें आहे. [कुमारसंभव–सर्ग १ श्लो० ५९.] ३. कंपं ददाति इति. ४. 'प्रियानाशे कृत्स्नं जगदिदमरण्यं हि भवति' इत्युत्तरचरिते भवभूतिः. ५. सर्ग ९९ श्लो० ४-१० पहा. ६. अन्याम्. ७. यागकालमर्यादेयम् इति तिलके. [स० ९९ श्लो० ८.] ८. वाजमन्नं पष्टी सुरा पेयमत्रेति वाजपेयः. ९. बहुसुवर्णकान्. १०. यागविशेषैः. ११. यज् धातूचें लिट्लकाराचें रूप. १२. वि+अति+अ+या+लुङ् त, गेला, अतीत झाला. १३. मरणम्.

तासां चकार सु य शाः स्वयं धर्म्याः क्रियाः प्रभुः ।
ता उद्दिश्य ब्राह्मणेभ्यो ददौ दानानि वत्सलः. ॥ ८६७

युधाजिताय द्वि ज पो गार्ग्यो निजपुरोहितः ।
दत्त्वायुतं हयान्नानावस्त्ररत्नधनं बहु. ॥ ८६८

संप्रेषितस्तं प्रि य कुद्राघवो भ्रातृभिः सह ।
प्रत्युद्गम्य क्रोशमात्रं पूजयामास सादरम्. ॥ ८६९

संपूज्य तमृषिं रा जा तद्धनं प्रतिगृह्य च ।
पृष्ट्वाथ कुशलं सर्वं मातुलस्य युधाजितः. ॥ ८७०

'किमाह मातुलो म ह्यं यदर्थं त्वमिहागतः ।
तत्सर्वं भगवन्ब्रूहि' स श्रीमानित्युवाच तम्. ॥ ८७१

गार्ग्यः प्राह, 'तव श्री मान्मातुलस्त्वाह राघव ! ।
सिंधोर्नदस्योभयतः पार्श्वेऽयं विषयो महान्. ॥ ८७२

शैलूषस्य सुता रा जो गंधर्वाणां महाबलाः ।
तिस्रः कोट्य इमं देशं रक्षंति रणकोविदाः. ॥ ८७३

तान्निर्जित्य रणे म त्तान्गंधर्वनगरं च तत् ।
निवेशाय पुरे द्वे स्वे देशोऽयमतिशोभनः.' ॥ ८७४

तमाह बाढं रा ज र्षिस्तंक्षपुष्कलनामकौ ।
भरतस्यात्मजौ वीरौ तं देशं विचरिष्यतः.' ॥ ८७५

एवमुक्त्वा पुण्य य शाः कुमारावभिषिच्य तौ ।
प्रेषयामास भरतं महत्या सेनया सह. ॥ ८७६

---

१. स० ९९ श्लो० १७-१९ पहा. २. युधाजित् हा भरताचा मातुल, कैकेयीचा भ्राता व अश्वपति राजाचा मुलगा. ३. अंगिरःसुतः. ४. स० १०० श्लो० २-४ पहा. ५. गंधर्वदेश सिंधुनदावर होता. [स० १०० श्लो० १०-११.] ६. गंधर्वराजस्य. ७. गंधर्वांचा राजा शैलूष त्याला तीन कोटि पोरें ! ! ! ८. हें कोणतें नगर ? कंदार, गांधार ? ९. गंधर्वदेश. १०. रामाचे पुत्र कुश व लव; लक्ष्मणाचे अंगद व चंद्रकेतु; भरताचे तक्ष व पुष्कल; शत्रुघ्नाचे सुबाहु व शत्रुघाती. कुशाची नगरी कुशावती, लवाची श्रावस्ती [स० १०८ श्लो० ४-५], अंगदाची कारुष देशांत अंगदीया पुरी, चंद्रकेतूची मल्ल देशांत चंद्रकांता नगरी [स० १०२ श्लो० ५-१२], तक्षाची तक्षशिला व पुष्कलाची पुष्कलावत नगरी [स० १०१ श्लो० ११], सुबाहूची मथुरा व शत्रुघातीची वैदिश नगरी [सर्ग १०८ श्लोक १०-११.]

मातुलेन[1] सहा **रा** त्तद्गंधर्वनगरं ततः ।
सप्तरात्रं महायुद्धं भरतस्तैः सहाकरोत्. ॥ ८७७

ततस्तेषु महा **म** न्युर्भरतो राघवानुजः ।
[2]संवर्तमस्त्रं मत्तेषु गंधर्वेष्वभ्यचोदयत्. ॥ ८७८

[3]कालपाशसिता **ज** ग्मुर्विलयं सर्व एव ते ।
क्षणेनाभिहतास्तेन तिस्रः कोट्यो महात्मना. ॥ ८७९

नानायुधधरा **य** त्ता गंधर्वा भस्मसात्कृताः ।
तद्युद्धं तादृशं घोरं न स्मरंति दिवौकसः. ॥ ८८०

ततो रामस्यानु **ज** न्मा तस्मिन्देशे पुरे वरे ।
निवेशयामास तयोः स्थापयामास [5]नंदनौ. ॥ ८८१

तक्षस्य धर्मन्या **य** ज्ञप्रवरस्य महामतेः ।
अलका धनदस्येव पुरी तक्षशिला मता. ॥ ८८२

पुष्कलस्यापि वी **रा** णां धीराणां संमतस्थितेः ।
पुष्कलावतमत्याढ्यं नगरं [6]नगरंजितम्. ॥ ८८३

निवेश्य सद्व्रत **म** ये पुरेऽब्दैः पंचभिस्ततः ।
पुनरायान्महाबाहुरयोध्यां [7]राघवानुजः ॥ ८८४

आगते भरते **श्री** मान्रामः सौमित्रिमब्रवीत्, ।
'अंगदश्चंद्रकेतुश्च तव पुत्राविमावहम् ॥ ८८५

अभिषेक्ष्यामि वी **रा** द्य देशः साधु विलोक्यताम्.' ॥

---

१. गंधर्वदेशीयांबरोबर भरताचें सात दिवस युद्ध झालें. [स० १०१ श्लो० ५.] २. संवर्तं नाम प्रलयकालानलाख्यम्. हें अस्त्र कालपाश होता. ३. कालपाशेन विदारिताः. काल+पाश+सित (षो+क्त). ४. नाशम्. ५. प्राकृत मंत्ररामायणांत असें वर्णन आहेः–'तक्षाभिध जो निजसुत तक्षशिलाख्या पुरी तयाशि करी । पुष्कलनामसुतातें निर्मुनि दे पुष्कलावती नगरी ॥ रामाज्ञेनें तनय स्थापुनि नगरद्वयांत तो भरत । साकेताला आला, अग्रजपदपद्मभक्तिलोभरत.॥ लक्ष्मण रघुवीराच्या आज्ञेनें दोन सत्पुरी वसवी; । कारुपथाभिधदेशीं, सुत अंगद चंद्रकेतु हे वसवी. ॥ जो चंद्रकेतुनामक, त्याची ते चंद्रकांतकाख्य पुरी; । मग अंगदीयनगरीं अंगदही तातदत्त राज्य करी ॥' [रामायणें–भाग १ मंत्ररामायण–उत्तरकांड–आर्या ३७४-३७७.] ६. नगाः (वृक्षाः, पर्वता वा) संत्यस्मिन्. 'पुण्यक्रियादि निपुणैश्चातुर्वर्ण्यजनैर्युतम् । अनेकजातिसंबद्धं नैकशिल्पिसमाकुलम् ॥ सर्वदैवतसंबद्धं नगरं त्वभिधीयते ।' म्हणून नगैः रंजितम् (शोभितम्) हें विशेषण. ७. सर्ग १०१ श्लो० १०-१७ पहा.

अब्रवीद्भरतो, 'देशो रम्यः कारुपथः प्रभो!' ॥ ८८६

गुरुवाक्यसमं **म** त्वा भरतस्य वचः प्रभुः ।

लक्ष्मणं प्राह, 'गच्छ त्वं कुरु तत्र पुरद्वयम्.' ॥ ८८७

स गुरूक्तः स्वात्म **ज** योश्चकार द्वे पुरे शुभे ।

अंगदस्यांगदीयाख्या पुरी परमशोभना. ॥ ८८८

चंद्रकेतोश्चाश्र **य** दा सतां साधुगुणैर्युता ।

चंद्रकांताभिधा रम्या गम्या जातु न या द्विषाम्. ॥ ८८९

रामाभिषिक्तं स्वं **रा** काकांतकांतप्रभं सुतम् ।

अंगदं स्थापयित्वागादयोध्यां लक्ष्मणोद्भवः. ॥ ८९०

भरतोपि तथा **मं** ल्लं चंद्रकेतुं महाबलम् ।

निवेश्य राज्ये साकेतमगात्संवत्सरोषितः. ॥ ८९१

उभौ रामांघ्रिभ **ज** ने सौमित्रभरतौ रतौ ।

कालं गतमपि स्नेहान्न विजानीत एव तौ. ॥ ८९२

पौरकार्येषु प्र **य** तमानानां धर्मचारिणाम् ।

एवं वर्षसहस्राणि दश तेषामयुस्तदा. ॥ ८९३

अथ काले गतेऽ **ज** स्य निदेशेन महात्मनः ।

कालस्तापसरूपेण राजद्वारमुपागमत्. ॥ ८९४

'दूतोऽहं तस्य भो! **य** स्य महर्षेरमितं बलम् ।

रामं दिदृक्षुरायातः कार्येणे'त्याह तत्र सः. ॥ ८९५

तच्छ्रुत्वा लक्ष्मणो **रा** ज्ञे न्यवेदयत, 'तापसः ।

दूतस्त्वां द्रष्टुमायातस्तं त्वं पश्य रघूत्तम!' ॥ ८९६

रामः प्रोवाच, 'सु **म** ते! वत्स! मत्सविधं द्रुतम् ।

प्रवेश्यतां मुनिस्तात! महौजा द्वारि मास्तु सः.॥ ८९७

सौमित्रिणा ततः **श्री** मांस्तापसः स प्रवेशितः ।

---

१. तदाख्यः पाश्चात्यौदीच्यदेशविशेषः. २. भरताचें वचन गुरुवाक्यतुल्य रामाला कां वाटलें हें पंतांनीं येथें सकारण सांगावयाचें होतें. ३. सर्ग १०२ श्लो० ९ पहा. ४. राकाकांतः (चंद्रः) इव कांता (मनोहरा) प्रभा यस्य तम्. ५. दृढांगम्. ६. एक वर्ष तेथें राहिलेला असा (भरत). ७. सर्ग १०३-१०४ पहा. ८. प्राकृत मंत्ररामायणांत ही कथा दिली आहे. [रामायणें–भाग १, पृ० २०१-२०३ मंत्ररामायण–उत्तरकांड–गीति ३७८-३९९.]

अधिगम्य रघुश्रेष्ठं ‘वर्धस्वे[1]’त्याह सादरम्. ॥ ८९८

सत्कृत्याह मुनिं **रा** जा, ‘[2]यस्य दूतस्त्वमागतः ।
तस्य संदेशवाक्यानि समग्राणि निवेदय.’ ॥ ८९९

एवमुक्तः स सं[3] **म** यं तापसः प्राह, ‘राघव ! ।
रहस्येतत्प्रवक्तव्यं किंचान्यदपि भूपते ! ॥ ९००

यः श्रोता कोऽपि **रा ज** न्यो द्रष्टा वा रघुनंदन ! ।
स वध्यस्तव रामाज्ञा [4]मुनींद्रस्येदृशी स्फुटा.’ ॥ ९०१

[5]सुदृढव्यवसा **य** स्तच्छ्रुत्वा तापसभाषितम् ।
तथेति स प्रतिज्ञाय रामो लक्ष्मणमब्रवीत्. ॥ ९०२

‘द्वारि तिष्ठ प्रवी **रा** य द्वास्थं त्वपसारय, ।
वाचं यः शृणुयाद्वा नौ पश्येद्वध्यः स मे भवेत्.’ ॥ ९०३

द्वारि निक्षि[6]प्य सु **म** तिं लक्ष्मणं लक्ष्मणाग्रजः ।
तमुवाच मुनिं वाक्यं कथयस्वेति सोऽब्रवीत्. ॥ ९०४

‘वचनं शृणु रा **ज** न्मे यदर्थमहमागतः ।
पितामहेन देवेन प्रेषितोऽस्मि महाबल ! ॥ ९०५

कालोऽहं भूरि गा **य** स्य तव [7]पुत्रो रघूत्तम ! ।
[8]समयो यः कृतः पूर्वं परिपूर्णः स [9]सत्पते ! ॥ ९०६

हत्वा दशास्यं त्रि **ज** गत्त्वया निष्कंटकं कृतम् ।
समयोऽयं निजं लोकमागंतुं जगदीश्वर ! ॥ ९०७

[10]नृलोके समयो **य** स्ते कृतो वस्तुं सुरेश्वर ! ।
दशवर्षसहस्राणि दशवर्षशतानि च, ॥ ९०८

स संपूर्णो महा **रा** ज ! प्रजाः संरक्षितुं यदि ।
भूयोऽपीच्छसि भद्रं ते वस राम ! यथासुखम्.’ ॥ ९०९

एवं पितामह **म** तं श्रुत्वा कालमुखात्प्रभुः ।

---

१. सर्व प्रकारें वृद्धि होवो. २. ‘यस्य दूतत्वमङ्गीकृत्य त्वमागतः’ इत्यर्थः. ३. पूर्वसंकेत. ४. जगत्प्राणरूपत्वात् चतुर्वेदमुखत्वात् सत्यवचस्त्वात् च ब्रह्मा ‘मुनींद्रः’ इत्युक्तिः. ५. यथोक्तकारी. ६. ठेवून. ७. हिरण्यगर्भोत्पत्तिसमये हिरण्यगर्भावस्थायां वा मायासंभावितोऽखिलसंसारस्य सृष्टिस्थितिसंहारनिग्रहानुग्रहलक्षणपंचकृत्यनिर्वाहकः कालाख्यः पुत्रः. ८. वा० रा० उत्तर० स० १०४ श्लो० १२-१३. ९. हे सत्पालका! १०. श्लो० ९०८-९०९ यांचें युग्मक आहे.

प्रहसन्नब्रवीत्कालं, 'मान्यं ब्रह्मवचो मम. ॥ ९१०

कार्यमेव मया **श्री** मान्यथैवाह पितामहः.' ।
'भद्रं तेऽस्तु गमिष्यामि येत एवाहमागतः.' ॥ ९११

तथा तैयोः काल **रा** जश्रेष्ठयोर्वदतोर्मिथः ।
दुर्वासा भगवान्योगी राजद्वारमुपागमत्. ॥ ९१२

स पुँत्रोऽत्रेरुँग्र **म** हा द्वाःस्थं सौमित्रिमब्रवीत्, ।
'अर्थोऽतिक्रामति मम, रामं दर्शय कुत्र सः.' ॥ ९१३

नत्वा रामस्यानु **ज** स्तं मुनिमाह कृतांजलिः, ।
'कोऽर्थस्ते भगवान्रामो व्यग्रस्तिष्ठ क्षणं मुने !'॥ ९१४

स चँड आह, 'मां **य** त्नादस्मिन्नेवं क्षणे द्रुतम् ।
प्रतिवेदय रामाय दुर्वासा विश्रुतो ह्यहम्. ॥ ९१५

नो चेर्त्वामथं तं **रा** मं शत्रुघ्नं भरतं तथा ।
संततिं नगरं राष्ट्रं शप्त्वा यास्याम्यमानितः.' ॥ ९१६

स 'एकस्यास्तु म **म** मा सर्वेषां मरणं सँमम्' ।
इति बुद्ध्या विनिश्चित्य राघवाय न्यवेदयत्. ॥ ९१७

कालं विसृज्य स **ज** गद्भर्ता दुर्वाससं मुनिम् ।
प्रत्युद्गम्य प्रणम्याह, 'किं कार्यं भगवन्निति.' ॥ ९१८

---

१. अहमेव स्वकृतमर्यादां न त्यक्ष्यामि, वृथायं संभ्रमः पितामहस्येति हासः. २. यस्माल्लोकादिहागतस्तमेव गमिष्यामि. ३. 'तयोः वदतोः' ही भावलक्षणार्था षष्ठी. ४. अत्रीचा पुत्र दुर्वासाः. ५. उग्रतेजाः. उग्रं महो यस्य सः. ६. द्वाररक्षणार्थ उभा राहिलेल्याला. ७. कोपनः. ८. दुर्वासाचें उत्तर प्राकृत मंत्ररामायणांत असें आहे:—'ऐसें परिसुनि रागें विप्र म्हणे, 'रे ! भला भला अनया ! । दुर्वासा आला हें, जाणुनि मातें म्हणेल काय न या ? ॥ कोठेंही बारण मज नाहीं घडलें, परंतु तूं केलें; । भाग्यमदानें तुमचें ज्ञान मला वाटतें लया गेलें. ॥ हरिहर इंद्र श्रीद ब्रह्मार्कयमेंदुवन्हिमुख मातें । प्रत्युद्गमनें पूजिति, हें श्रुत नाहींच काय रामातें ? ॥ तरणिकुळींचे राजे दशरथपर्यंत देखिले सारे; । परि हा दुर्नय कोठें नव्हता, तो जोडिलात कैसा रे ! ? ॥ मार्गी गमनें श्रमलों, आलों भेटावया स्वयें, पर तो । राघव दर्शन नेघे, म्हणतो, 'कां पातलां वृथा ? परतो.' ॥ आला दुर्वासा द्विज हें सत्वर सांग ना, उभा आहें; । किंवा तापसकोपज्वलनाचें वीर्य लक्ष्मणा ! पाहें.' ॥ [प्राकृत मंत्ररामायण—मोरोपंतकृत रामायणें, भाग १ पृ० २०२ गीति ३८९-३९४.] ९. समकालम्.

रामं प्रत्याह स **य**[1] मिप्रवरो'ऽ[2]नशनव्रतम् ।
अयुताब्दं कृतं सिद्धमन्नमिच्छामि राघव !' ॥ ९१९

श्रुत्वाशु रघुरा **ज** स्तद्वाक्यं सुप्रीतमानसः ।
भोजनं मुनिमुख्याय यथासिद्धमुपाहरत्. ॥ ९२०

स तद्भुक्त्वा[3]स्तूद **य** स्ते सदेत्युक्त्वा महातपाः[7] ।
तृप्तोऽमृतरसान्नेन स्वमाश्रममुपागमत्. ॥ ९२१

स्मृत्वा कालवचो **रा** जा स्वां प्र[4]तिज्ञां च वत्सलः ।
दुःखितोऽवाङ्मुखस्तूष्णीं तस्थौ तं लक्ष्मणोऽब्रवीत्. ९२२

'महाराज! त्वम **म** लां स्वां कीर्तिं सुस्थिरां कुरु, ।
ज[5]हि मां सौम्य! विस्रब्धं प्रतिज्ञां परिपालय. ॥ ९२३

भग्नप्रतिज्ञा ये **श्री** मंस्ते यांति नरकं नराः ।
जहि मां निर्विशंकस्त्वं धर्मं वर्धय राघव!' ॥ ९२४

तथोक्तः शोकभा **रा** र्तो बभूवाकुलमानसः ।
तद्वृत्तं सुहृदां मध्ये कथयामास स[6]न्नवाक्. ॥ ९२५

मंत्रिणो गतसा **म** र्थ्यास्तूष्णीमासन्विचेतसः ।
अथोवाच वसिष्ठस्तं सत्यसंधं महामतिः. ॥ ९२६

'दृ[8]ष्टं मयैतद्रा **ज** र्षे! तत्वज्ञाच्च श्रुतं पुरा ।
लक्ष्मणेन वियोगोऽयं भवितैव तव प्रभो! ॥ ९२७

त्य[9]जैनं राम! सु **य** शाः प्रतिज्ञां मा वृथा कृथाः ।
प्रतिज्ञायां विनष्टायां धर्मः सर्वोऽपि नश्यति.' ॥ ९२८

स गुरोः सत्यसा **रा** त्तच्छ्रुत्वा वाक्यमकल्मषम् ।
धैर्यात्परिषदो मध्ये रामो लक्ष्मणमब्रवीत्. ॥ ९२९

'विस[10]र्जये त्वां सु **म** ते! मा भूद्धर्मविपर्ययः ।
त्यागो वधो वा विहितः साधूनामुभयं समम्.' ॥ ९३०

१. यमिषु प्रवरः, मुनिश्रेष्ठः. २. उपवासाचें कष्टव्रत. ३. 'अस्तु उदयः ते सदा' अशीं पदें. ४. संस्कृत मंत्ररामायण-उत्तर० श्लो० ९०३ पहा. ५. जहि=हन्=लोट् द्वि. ६. सन्ना वाक् यस्य सः, गद्गदकंठः. ७. तपोबलेनेत्यर्थः. ८. तत्वज्ञात् दुर्वाससः. मां द्रष्टुमागतेन त्वत्पित्रा पृष्टस्य मदाश्रमस्थदुर्वाससो मुखात्. ९. 'त्यागो वधो वा विहितः साधूनामुभयं समम्.' १०. वाल्मीकि रामायणांत बहुतेक असाच श्लोक आढळतो. [स० १०६ श्लो० १३.]

इत्युक्तः साश्रुक **ज** नि प्रभुं नत्वा स लक्ष्मणः ।
विवेश वेश्म न प्रायात्सरयूतीरमात्मवान्. ॥ ९३१

तत्रोपस्पृश्य [1]सं **य** तस्रोता बध्वासनं दृढम् ।
योगयुक्तोऽभवद्धीमान्संस्मरन्राममात्मनि. [2] ॥ ९३२

शक्रादयस्तम **ज** रा दिव्यैः पुष्पैर्मनोहरैः ।
अवकीर्य मुदा स्तुत्वा गीतैर्वाद्यैश्च नर्तनैः. ॥ ९३३

सत्कृत्य सर्वप्रि **य** कृत्प्रवरं राघवानुजम् ।
[3]सशरीरं विमानेन स्वर्गं निन्युः कृतोत्सवाः. ॥ ९३४

वि[4]सृज्य लक्ष्मणं **रा** मो दुःखशोकसमन्वितः ।
पुरोधसो मंत्रिणश्च नै[5]गमांश्चेदमब्रवीत्. ॥ ९३५

'अयोध्यायां पतिं [6]**म** ह्या भरतं धर्मवत्सलम् ।
वीरमद्याभिषेक्ष्यामि ततो यास्याम्यहं वनम्. ॥ ९३६

राजास्तु भरतः **श्री** मान्[7]संभारानानयंत्विह ।
अद्यैवाहं गमिष्यामि लक्ष्मणेन गतां गतिम्.' ॥ ९३७

तच्छ्रुत्वा[8] वचनं **रा** ज्ञः सर्वाः प्रकृतयो भृशम् ।
शिरोभिः प्रणता भूमौ गतसत्वा इवाभवन्. ॥ ९३८

भरतश्चापि वि **म** ना विसंज्ञोऽभूत्तदा भृशम् ।
राज्यं विगर्हयामास वचनं चेदमब्रवीत्. ॥ ९३९

'वचनं शृणु रा **ज** न्! मे राज्यं स्वर्गं त्वया विना ।
न कामये क्षणं स्वप्ने सत्येनाहं शपे प्रभो! ॥ ९४०

कुशो लवश्च न **यं** विद्धर्मवित्प्रवर! प्रभो! ।
कोसलेषूत्तरेष्वेतावभिषेक्तुं त्वमर्हसि. ॥ ९४१

इतो दूताः सत्व **रा** स्तं शत्रुघ्नं प्रति राघव! ।

---

१. संयतानि (निगृहीतानि) स्रोतांसि (इंद्रियद्वाराणि) येन सः. २. 'करुनि प्राणायाम सजिलें शरयूतटांगणीं काय; । स्वर्गप्रयाण केलें, श्रीशांशाला अशक्य हें काय ? ॥ [प्राकृत मंत्ररामायण—उत्तरकांड—गीति ४०३.] ३. अनेन मनुष्यशरीरसंस्थानमेव देवशरीरसंस्थानं प्राप्तम् । न तु पूर्वशरीरपरित्यागः शरीरांतरपरिग्रहश्चेति सूचितम्. ४. हा श्लोक वा० रामायणांत आहे. [सर्ग १०७ श्लोक १.] ५. नैगम=नागरजन. ['नागरो वणिक् नैगमौ द्वौ' इत्यमरः. । नैगमः स्यादुपनिषद्वणिजो नागरेऽपि च' इति विश्वः.] ६. मह्याः पतिम्=भूपतिम्. ७. भरताभिषेकार्थान्. ८. सर्ग १०७ श्लो० २-३ पहा.

गच्छंस्त्वाख्यातुमस्माकं गमनं भक्तवत्सल!' ॥ ९४२

ततो गु[2]रुः प्राह, 'म हीं पश्येमाः प्रकृतीर्गताः ।
ज्ञात्वा समीप्सितं कार्यं वत्स! मा विप्रियं कृथाः.' ९४३

दयालुरुत्थाप्य ज नान्कि करोमीत्यथाब्रवीत् ।
ततः सर्वेपि ते भक्ता रामं वचनमब्रुवन्. ॥ ९४४

'सदाराः ससुता य त्तास्त्यक्त्वा सर्वस्वमीश्वर! ।
गच्छंतमनुगच्छामो यत्र राम! गमिष्यसि.' ॥ ९४५

भक्तान्समस्तान्स्व ज नान्बाढमित्येव सोऽब्रवीत् ।
ततोऽभिषिच्य तौ पुत्रावंकमारोप्य वत्सलः. ॥ ९४६

परिष्वज्य स्वप्रि य कृन्मूर्ध्न्युपाघ्राय चासकृत् ।
स्वे पुरे प्रेषयामास सुसंपन्नौ कुशीलवौ. ॥ ९४७

ततः परं स[3]दा रा ध्यो रामो राजीवलोचनः ।
दू[4]तान्संप्रेषयामास शत्रुघ्नाय महात्मने. ॥ ९४८

प्र[5]भुणा प्रेषिता म ध्येऽ[6]कृतवासा महाजवाः ।
दूतास्त्रिभिरहोरात्रैः साकेतान्म[7]धुरां ययुः. ॥ ९४९

शत्रुघ्नायाथ ते श्री मद्वृत्तमाचख्युरद्भुतम् ।
लक्ष्मणस्य परित्यागं प्रतिज्ञां राघवस्य ताम्. ॥ ९५०

'विभज्य पु[8]त्रयो रा ज्यं दत्तं विंध्यस्य रोधसि ।
पुरी कुशावती नाम कुशस्य रचितोत्तमा. ॥ ९५१

श्रावस्तीति पुरी म ह्यां प्रसिद्धिं प्रापिता वरा ।
लवस्य निर्मिता वीर! राघवेण महात्मना. ॥ ९५२

कृत्वा त्वयोध्यां वि ज नां राघवो भरतस्तथा ।
पौरैः समं स्वर्गमने कृतोद्योगौ स[9]हानुगौ.' ॥ ९५३

एवं निवेद्य प्र य ताः शत्रुघ्नाय महात्मने ।
विरेमुस्ते ततो दूता, 'भो! त्वरस्वे'ति चाब्रुवन्. ॥ ९५४

श्रुत्वा वृत्तं तत्त्व रा वाञ्छत्रुघ्नः [10]कांचनाभिधम् ।

---

१. सर्ग १०७ श्लो० ५-८ पहा. २. वसिष्ठः. [स० १०७ श्लो० १०.] ३. सद्भिराराध्यः. अथवा सदा आराध्यः. ४. हें अर्ध वा० रामायणांत आहे. ५. सर्ग १०७ श्लो० १६-२० पहा. ६. अकृतो वासो यैस्ते. ७. मधुराम्. ८. 'पुत्रयोः' इति शेषे षष्ठी. ९. सर्ग १०८ श्लो० ३५. पहा. १०. कांचन नामक पुरोहिताला.

पुरोहितं समानीय प्रजाश्चाकथयत्स्वयम्. ॥ ९९५

अभिषिच्याथ सु **म** हत्तद्राज्यं स्वं विभज्य सः ।
पुत्राभ्यां प्रददौ लेभे सुबाहुर्मधुरां पुरीम्. ॥ ९९६

शत्रुघाती च ते **ज** स्वी वैदिशं प्राप सत्पुरम् ।
एवं कृत्वागादयोध्यां रथेनैकेन सत्वरम्. ॥ ९९७

स शत्रुघ्नो विन **य** वानभिवाद्याह, 'राघव! ।
तवानुगमने राजन्विद्धि मां कृतनिश्चयम्. ॥ ९९८

दत्तं राज्यं तनु **ज** योः कृतं कृत्यमशेषतः ।
न चान्यदद्य वक्तव्यमागतोऽहमुपासितुम्. ॥ ९९९

त्वच्छासनं स्वाश **य** ज्ञ! प्रभो! नित्यमनुष्ठितम् ।
विहन्यमानं नेच्छामि प्रसादं कर्तुमर्हसि.' ॥ ९९०

तं बाढमित्युदा **रा** णां गुरुराहातिवत्सलः ।
ततः समागता ऋक्षा वानराश्च सयूथपाः. ॥ ९९१

ते कृतांजलयो **म** ह्यां पतिताः प्रभुमब्रुवन्, ।
'नयास्मानपि काकुत्स्थ! शरणागतवत्सल!' ॥ ९९२

तांश्च बाढमिति **श्री** मानुवाच श्रितवत्सलः ।
अथ बद्धांजलिः प्राह सुग्रीवो रघुनंदनम्. ॥ ९९३

'अभिषिच्यांगदं **रा** ज्ये प्राप्तोऽहं राम! कामद! ।
तवानुगमने राजन्विद्धि मां कृतनिश्चयम्.' ॥ ९९४

तं स्मयन्नाह स **म** ये प्राप्तं बाढमिति प्रभुः ।
बिभीषणमथोवाच वाचस्पतिशतस्तुतः. ॥ ९९५

'शृणु राक्षसरा **ज**! त्वं कार्यं मच्छासनं त्वया ।
प्रजाः संरक्ष धर्मेण नोत्तरं वक्तुमर्हसि. ॥ ९९६

यावच्चंद्रोऽब्जप्रि **य** श्च यावत्तिष्ठति मेदिनी ।

---

१. याचें नांव श्रुतसेन असें प्राकृत मंत्ररामायणांत आहे. [प्रा० मं० रा० उत्तरकांड—गी० ४१०.] २. वैदिश नामक नगराला. ३. हें अर्ध वा० रामायणांत आहे. [स० १०८ श्लो० १४.] ४. मां मानुगच्छेति न वक्तव्यम्. ५. सु+आशय+ज्ञः=हृद्गतभाव पूर्णपणें जाणणाऱ्या रामा, आजपर्यंत अव्याहतरीतीनें पाळलेल्या आज्ञेचा भंग व्हावा असें मी इच्छित नाहीं; अनुगमनाविषयीं माझा पक्का निश्चय झाला आहे, करितां दया करून मला आपल्याबरोबर येऊं द्यावें. ६. सूर्यः. कमळांला सूर्य प्रिय असतो अशी काव्यप्रसिद्धि आहे.

यावच्च मत्कथा लोके तावद्राज्यं तवास्त्विह.[1]' ॥ ९६७

तथेति रक्षसां **रा** जा प्रतिजग्राह तद्वचः ।
तमेवमुक्त्वा श्रीरामो हनूमंतमथाब्रवीत्. ॥ ९६८

'तावत्प्रीतस्त्वं र **म** स्व मद्वाक्यम्[2]नुपालयन् ।
मत्कथाः प्रचरिष्यंति यावल्लोके हरीश्वर!' ॥ ९६९

कृतांजलिर्वायु **ज** स्तमब्रवीद्राममीश्वरम्, ।
'यावत्तव कथा लोके तावत्स्थास्याम्यहं भुवि.' ॥ ९७०

जांबवंतं प्रव **य** सं मैंदं च द्विविदं प्रभुः ।
प्राह, 'यावत्कलियुगं[3] तावज्जीवत सर्वदा.' ॥ ९७१

अथ प्रभात[4] र **ज** नौ पृथुवक्षा महायशाः ।
रामः कमलपत्राक्षः स्वपुरोहितमब्रवीत्. ॥ ९७२

'अग्रेऽग्निहोत्रं प्र **य** तैर्विप्रैः सार्धं व्रजत्विदम् ।
वाजपेयातपत्रं[5] च शोभमानं महापथे. ॥ ९७३

ततो गुरु[6]स्तपो **रा** शिः सर्वं निरवशेषतः ।
चकार विधिवद्धर्मं महाप्रस्थानिकं[7] विधिम्. ॥ ९७४

सूक्ष्मांबरधरो **म** त्या स ब्रह्मा[8]वर्तयन्परम् ।
कुशान्गृहीत्वा पाणिभ्यां[9] सरयूं प्रययौ स्वयम्. ॥ ९७५

मौनव्रतधरः **श्री** मान्पद्भ्यामेव चलन्पथि ।
निर्जगाम गृहात्तस्माद्दीप्यमानो यथांशुमान्[10]. ॥ ९७६

पार्श्वेऽस्य दक्षिणे **रा** ज्ञः पद्मा[11] श्रीः[12] समुपस्थिता ।

---

१. 'राम म्हणे, 'निर्भय तूं यावत् चंद्रार्कभू मदीयकथा । तावत् बिभीषणा! हें राज्य करावें धरूनि साधुपथा. ॥ संतत मला स्मरावें, विषयांच्या सेवनासि विसरावें; । सज्जनपदां भजावें बिभीषणा! आपुल्या पुरा जावें. ॥' [प्रा०मं० रामायण—उत्तरकांड—गी०४१४-४१५.] २. सर्ग १०८ श्लो० ३२ पहा. ३. हनूमद्बिभीषणयोः प्रलये, इतरेषां तु कलौ कृष्णावतारे नाश इति बोध्यम्. ४. प्रभातायां रजन्याम्. ५. हें अर्ध वा० रामायणांत आहे. [स० १०९ श्लो० २.] ६. वसिष्ठः. ७. महाप्रस्थानं नाम परलोकगमनाय संकल्पपूर्वकं प्रस्थानं तदर्हति माहाप्रस्थानिकं विधिमुद्दिश्य यो धर्मः कर्तव्यस्तं धर्मं विधिवच्चकार. वा० रामायणांत 'माहाप्रस्थानिक' असा पाठ आहे. [स० १०९ श्लो० ३.] ८. प्रागगस्त्योपदिष्टं ब्रह्मसिद्धांतप्रधानमहामंत्रसर्वस्वं श्रीमद्ब्रह्महृदयमावर्तयन् सम्यङ्मनोवाग्वृत्तिभ्यामनुसंदधान इत्यर्थः. मत्या=मनसा. ९. अंगुलिविवरप्रसक्तान् कृत्वा. १०. सूर्यः. ११. पद्महस्ता. १२. लक्ष्मीः.

सर्व्येऽपि च मही देवी [1]व्यवसायस्तथाग्रतः. ॥ ९७७

स्तुतानि शास्त्राण्य **म** रैर्यानि तस्य जगत्पतेः ।
अन्वयुस्तानि तं **राम**ं कृत्वा पुरुषविग्रहम्. ॥ ९७८

वेदाश्च सर्वे त्रि **ज** गन्मूलं राजर्षिरूपिणम् ।
अनुजग्मुस्तदा **राम**ं प्रभुं ब्राह्मणरूपिणः. ॥ ९७९

[2]ओंकारश्चाथ गा **य** त्री वैषट्कारश्च मूर्तिमान् ।
यज्ञाश्चानुव्रता **राम**ं सर्वे पुरुषविग्रहाः. ॥ ९८०

हृष्टाः सपरिवा **रा** स्तं पौरजानपदा जनाः ।
अन्वयुः पशवः सर्वे पक्षिणः [4]स्थावरा अपि. ॥ ९८१

सर्वे **रामानुग** **म** ने हृष्टाः पुष्टाः प्लवंगमाः ।
तेषां बभूव भाग्येन [5]स्वर्गद्वारमपावृतम्. ॥ ९८२

भूताः प्रेताश्चानु **ज** ग्मुः प्रभुं किंबहुना तदा ।
न सूक्ष्ममप्ययोध्यायां प्राणिजातं स्म दृश्यते. ॥ ९८३

भ्रातरौ मंत्रिणो **य** त्ताः सर्वे सांतःपुराः पुरात् ।
निर्गत्य तेऽन्वयू **राम**ं प्रभुं तद्गुणरंजिताः. ॥ ९८४

[6]अध्यर्धयोजनं **ज** न्मिजन्ममृत्युभयापहः ।
गत्या ददर्श **सरयू** **रामः** पुण्योदकां नदीम्. ॥ ९८५

तस्याः स्वर्गप्रदो **य** स्तं देशं **राम**ः समागतः ।
तस्मिन्मुहूर्ते ब्रह्मापि त्रिदशैर्मुनिभिः सह. ॥ ९८६

विमानानां भास्व. **रा** णां शतकोटिभिरावृतम् ।
प्रभाभिः स्वर्गिणां व्योम ज्योतिर्मयमिवाभवत्. ॥ ९८७

सुखस्पर्शस्तत्र **म** रुद्ववौ शीतः [7]सुगंधवान् ।
पपात पुष्पवृष्टिश्च देववाद्यानि सस्वनुः. ॥ ९८८

---

१. व्यवसायशक्तिः, संहारशक्तिः. २. गायत्री सर्वरक्षिणी सर्ववेदतन्मूलयज्ञाधिकृताशेषजगद्रक्षिका तस्या अपि मूलमोंकारोऽप्यनुगतः, अनेन सर्वज्ञानयोगो दर्शितः. ३. कर्मयोगः. ४. स्थावराणामनुगमनं भगवतो रामस्य सदयावलोकनेन तदानीं ज्ञानक्रियाशक्त्युद्भवादुपपद्यते ५. ब्रह्मलोकद्वारम्. रामेण सहोपेंद्रलोकगमनद्वारा रामेण सहागतानां सर्वजंतूनां ब्रह्मलोकस्यैव प्राप्तिरिति बोध्यम्. ६. अर्धाधिकं योजनं गत्वा. [स० ११० श्लो० १.] ७. स० ११० श्लो० ४-६ पहा.

गंधर्वाश्च जगुः **श्री** मद्रामस्य चरितं मुदा ।
मुख्या[1] अप्सरसस्तत्र ननृतुर्हृष्टमानसाः. ॥ ९८९

रचितांजलि रा **रा** त्तमागत्य विधिरब्रवीत्, ।
'आगच्छ[2] **वि**[3]**ष्णो**! भद्रं ते तां तनुं प्रविश स्वैकाम्.[4] ९९०

भ्रातृभिः[5] सह धा **म** त्वं निजं **विष्णो**! विभूषय ।
लोकानां गतिरस्याद्य न त्वां जानंति केचन. ॥ ९९१

ज्ञानशक्तिं विना **ज**! त्वां न जानंति जगद्गुरो!' ।
इति वाक्यं **वि**धेः श्रुत्वा **रा**मो रमयतां वरः ॥ ९९२

पद्मापतिः पुण्य **य** शाः सशरीरोऽनुजैः सह ।
विवेश वैष्णवं[6] धाम ध्यातं यत्साधुभिः सदा. ॥ ९९३

ततो **विष्णु**मयं **रा** मं पूजयंति स्म देवताः ।
सिद्धा मरुद्गणाश्चैव सेंद्राः साग्निपुरोगमाः. ॥ ९९४

देवर्षयो जात **म** हा गंधर्वास्त्रिदशांगनाः ।
सुपर्णनागयक्षाश्च दैत्यदानवराक्षसाः. ॥ ९९५

'अत्र त्वय्यागतेऽ **ज**! त्रिदिवः पूर्णमनोरथः ।
दृष्टी विकल्मषो जात इत्यूचुर्**विष्णु**मव्ययम्. ॥ ९९६

अथ **विष्णुः** स्वप्रि **य** कृत्तं पितामहमब्रवीत्, ।
'एषां लोकं जनौघानां दातुमर्हसि सुव्रत. ॥ ९९७

इमे सर्वेऽप्यात्म **ज** न्मन्! स्नेहान्मानुगताः सदा ।
भक्ता हि भजनीयाश्च त्यक्तात्मानश्च मत्कृते.'[7] ॥ ९९८

श्रुत्वा वाक्यं स प्रि **य** स्य **ब्र**ह्मा विश्वकृदब्रवीत्, ।
'लोकान्संतानकान्नाम[8] यास्यंतीमे समागताः. ॥ ९९९

तिर्यग्गतं त्वानु[9] **रा** गाद्यद्विष्णोऽनुगतं ध्रुवम् ।
प्राणांस्त्यक्ष्यति भक्त्या तत्संतानेषु निवत्स्यति. ॥ १०००

---

१. ह्या मुख्य अप्सरांचीं नांवें:—'घृताची मेनका रंभा उर्वशी च तिलोत्तमा। सुकेशी मंजुघोषाद्याः कथ्यंतेऽप्सरसो बुधैः ॥' २. यतो लोकं मनुष्यलोकं गतस्तं लोकमागच्छ. ३. गृहीतविष्णुशरीर. ४. स्वतनुवत् अत्यंतं प्रियं लोकं प्रविश. या० रामायणांत 'स्विकाम्' असा पाठ आहे. [स० ११० श्लो० ९०.] ५. 'भ्रातृभिः सह' इत्यत्र पूजायां बहुवचनम्. ६. स० ११० श्लो० १२ पहा. ७. स० ११० श्लो० १६-१७ पहा. ८. संतानकान् नाम लोकान् क्रमेण ब्रह्मलोकप्राप्तिद्वारा मुक्तिजनकान् यास्यंति. ९. त्वा (त्वाम्) अनुरागात्.

लो को यथा मम **म** हान्युक्तो ब्रह्मगुणैः सदा ।
ब्रह्मलोकसमीपस्थः क्रममुक्तिप्रदः कृतः. ॥ १००१

लोकः संतानकः **श्री** मान्मयैषामद्य कल्पितः' ।
इत्युवाच स्वयं **ब्र**ह्मा **भ**गवान्भूतभावनः. ॥ १००२

ततः पतिर्वान **रा** णां **सु**ग्रीवो हृष्टमानसः ।
निमज्य **सा**रवे तीर्थे विवेश रविमंडलम्. ॥ १००३

**गो**प्रताराव्हये **म** ग्नास्तीर्थे परमपावने ।
**ऋ**क्षाश्च कपयः प्रापुः सुरान्येभ्यस्तदुद्भवः. ॥ १००४

पौरा जानपदा **ज** ग्मुः स्वजनैः सह **सा**रवम् ।
स्वर्गस्थाः शुश्रुवुस्तेषां चकिताः सहसा रवम्. ॥ १००५

स्थावरा जंगमा **य** ज्ञैर्महद्भिर्दुर्लभं पदम् ।
**गो**प्रतारे कृतस्नानाः प्रापुर्भासुरविग्रहाः. ॥ १००६

सुतीर्थे प्राणिवा **रा** स्ते प्रहृष्टाः कृतमज्जनाः ।
दिव्यदेहाः प्रसादेन प्रभोः सर्वेऽपि सज्जनाः. ॥ १००७

अमर्त्यत्वं गता **म** र्त्या दिव्यालंकारवाससः ।
विमानानि समारूढाः सर्वे भास्वरमूर्तयः. ॥ १००८

गोप्रतारे तदा **ज** न्मी सर्वस्त्यक्तकलेवरः ।
दिव्यरूपोऽभवच्छ्वापि बिडालो ग्रामसूकरः. ॥ १००९

**स**रयूपुण्यतो **य** स्य महिमा परमाद्भुतः ।
ये तत्र त्यक्तदेहास्ते लोकं संतानकं गताः. ॥ १०१०

संतानकं मुदा **ज** ग्मुर्ऋक्षवानरराक्षसाः ।
अनुग्रहाद्भगवतो **रा**मस्याद्भुतकर्मणः. ॥ १०११

**गं**धर्वैः सह गा **य** द्भिः पुण्यं निजयशोद्भुतम् ।
शृण्वन्संतानकं निन्ये विमानैस्तान्दयार्णवः. ॥ १०१२

तत्र सर्वानुदा **रा** णां नाथः श्री**वि**ष्णुरीश्वरः ।
स्थापयामास तान्प्रेम्णा पितापुत्रानिवौरसान्. ॥ १०१३

ततः स्वयं स्वधा **म** स्वैः सर्वैर्ब्रह्मादिभिः सह ।
ययौ भक्त**म**यूराणां मेघो **रा**मः सतां गतिः. ॥ १०१४

---

१. सत्यसंकल्पत्वादिब्रह्मगुणैः. २. उज्ज्वलदेहाः.

## काव्योपसंग्रहः.

(काव्यपठनफलम्.)

**श्रीमद्रामायणं** **श्री** मान्वाल्मीकिर्मुनिपुंगवः ।
महाकाव्यं चकारेत्थं भव्यमादिमहाकविः. ॥ १

गीतं **रामकुमा** **रा** भ्यां श्रुतं सर्वैर्महर्षिभिः ।
**ब्रह्म**णा **सत्य**लोके च **कै**लासाग्रेऽपि शंभुना. ॥ २

अश्वमेधे महा **मे** न्यौ सह सर्वैर्मुनीश्वरैः ।
सचिवैर्भ्रातृभिः सार्धं **राम**ेणापि श्रुतं **स्वयम्**. ॥ ३

हितेच्छुभिः[3] समा **ज** प्यं श्राव्यं दुःस्वप्ननाशनम् ।
पापतापप्रशमनं मनोरथकरं परम्. ॥ ४

वेदैः सममिदं **य** ज्ञदानतीर्थफलप्रदम् ।
सर्वपापैः प्रमुच्येत पादमप्यस्य यः पठेत्. ॥ ५

पापान्यपि दिवा **रा** त्रौ यः कुर्यान्मानवः सदा ।
पठत्येकमपि श्लोकं पापात्स परिमुच्यते. ॥ ६

न केवलमिदं **म** ह्यां पाताले त्रिदिवेऽपि च ।
नित्यं शृण्वंति संहृष्टाः काव्यं **रामायणं** परम्. ॥ ७

**श्रीमद्रामायणे**ऽ **ज** स्रं प्रेमात्यंतं **ह**नूमतः ।
**ना**रदस्य तु सर्वस्वमेत**द्वा**ल्मीकिसद्गुरोः. ॥ ८

गंधर्वैर्गीयते **य** त्नात्सिद्धैश्च परमर्षिभिः ।
सर्वैर्मुमुक्षुभिर्मुक्तैः सेव्यते सुमनोहरम्. ॥ ९

**रामायणं** यशोऽ **ज** स्रं श्रीमच्छ्रीनायकाननम् ।
का न नंदति **चै**तेन समैतत्स्वर्द्रुकाननम्. ॥ १०

प्रेम **रामायणे** **य** स्य प्रसन्नास्तस्य देवताः ।
या आपदः प्रपश्यंति स्वबलं भ्रश्यदेव ताः. ॥ ११

**वाल्मीकिं** तपसां **रा** शिमनुमान्य महाकविम् ।
तद्गुरुं नारदं **व्यासं** **शु**कमन्यान्कवीन्मुनीन् ॥ १२

---

१. 'परानंदमयो रामो ह्यभ्यते श्रवणादिभिः । अतोऽस्य चाभिधा पुण्या रामायणमितीरिता ॥' [स० १११ श्लो० १ टीका:.] २. यशे. ३. हा काव्यफलोपदेश आहे. याचें वर्णन मूळांत १११ व्या सर्गांत आहे. ४. हें अर्ध मूळांत आहे. [स० १११ श्लो० ६.] ५. स्वर्गांतील वृक्षाचें वन, नंदनोद्यान.

'मंत्ररामायणं' स्म ह्यं श्रीमद्रामायणात्स्वयम् ।
दत्तमुद्धृत्य बालाय श्रीरामेण दयालुना. ॥ १३

---

## प्रतिकांडं मंत्रसख्या.

(अनुष्टुब्.)

मंत्ररामायणे बालकांडे रामप्रसादजे ।
त्रयोविंशतिरेवात्र मंत्राः [१]संत्रासदाः कलेः. ॥ १
द्वितीयेऽत्र सतामिष्टेऽयोध्याकांडे शुभप्रदाः ।
विंशतिः परिसंख्याता मंत्राः सेव्याः सतां सदा. ॥ २
तृतीयेऽरण्यकांडेऽत्र त्रिंशन्मंत्राः प्रकीर्तिताः ।
कामदाः कविवर्गाणां [२]नंदनस्था द्रुमा इव. ॥ ३
चतुर्थे त्वत्र किष्किंधाकांडे कांडेऽभिपूजिते ।
त्रिंशदेव महामंत्राः पुरुषार्थफलप्रदाः. ॥ ४
पंचमे सुंदरे कांडे मंत्राः षट्त्रिंशदुत्तमाः ।
सर्वोऽपि सेवनाद्येषां भवेत्पुरुष उत्तमः. ॥ ५
मंत्राः. षष्ठे युद्धकांडे षडशीतिरुदाहृताः ।
सर्वेऽपि रसिका येभ्यः समुत्पन्नमुदाहृताः. ॥ ६
मंत्रा उत्तरकांडेऽत्र सर्वसंसिद्धिवल्लभाः ।
एकोनाशीतिरुदिता मुदिता यैः सतां सभाः. ॥ ७
एवं सप्तसु कांडेषु सर्वे मंत्राः शुभप्रदाः ।
सदा जयंति चत्वारः शतानि त्रीणि चार्चिताः. ॥ ८
मंत्ररामायणे ग्रंथे सज्जनानां सुखप्रदे ।
अक्षिबाणांकशिखि(३९५२)भिर्विज्ञेया श्लोकसंमितिः. ॥ ९
त्रयोदशाक्षरो मंत्रः सर्वत्रात्र विराजते ।
तेनैतन्नामतः 'श्रीमन्मंत्ररामायणं' बुधाः. ॥ १०

---

१. कलेः संत्रासं घंति (खंडयंति) इति. २. इंद्राच्या बागेंतील झाडांप्रमाणें.

वर्णः प्रथमकांडेऽत्र महामंत्रस्य सज्जनाः ।
श्लोकानां प्रथमे पादे सर्वत्र प्रथमः स्फुटः. ॥ ११
द्वितीये च द्वितीयः स तृतीये च तृतीयकः ।
एवं सप्तमकांडेंऽत्ये मंत्रवर्णोऽत्र सप्तमः. ॥ १२
पृष्ठे त्रयोदशश्लोकलिपेरेतत्स्फुटीभवेत् ।
आर्षात्समुद्धृतमिदं तीर्थं गंगाऱ्हदादिव. ॥ १३

### उपसंहार.

(शार्दूलविक्रीडित.)

सत्काव्योपवनं यदाद्यकविना वाल्मीकिना निर्मितं
तत्रत्यैरेतिरम्यपद्यकुसुमैः प्रीत्या गृहीतैर्गुणे ।
श्रीमंत्रे विरचय्य दाम रुचिरं '**श्रीमंत्ररामायणं**'
श्रीरामस्य जगद्गुरोरुचितयोः पादाब्जयोरर्पितम्. ॥ १

---

१. प्राकृत मंत्ररामायणांतील उपसंहार अवश्य पहावा म्हणजे सरस आणि मनोहर कोणता आहे याचा निर्णय करण्यास ठीक पडेल. २. पंतांनीं आपल्या संस्कृत मंत्ररामायणांत मूळ ग्रंथांतील पद्यकुसुमांचा सन्निवेश केला आहे—या विधानाचें समर्थन टीपांमध्यें पूर्वी आलें आहे व तशा पद्यांचा उल्लेख त्या त्या स्थळीं आम्हीं अनेकवार केला आहे. ३. माळ (दामन्) ही गळ्यांत घालावी किंवा पायांत घालावी ही औचित्यविचारचर्चा काव्यरसिकांनींच करावी.

# मोरोपंतकृत रामायणें.

## भाग चौथा.

## परिशिष्टें.

### १. वंशवृक्ष.

#### (१) श्रीरामाचा वंशवृक्ष.

१ ब्रह्मा
|
२ मरीचि
|
३ कश्यप
|
४ विवस्वत्
|
५ मनु
|
६ इक्ष्वाकु
|
७ कुक्षि
|
८ विकुक्षि
|
९ बाण
|
१० अनरण्य
|
११ पृथु
|
१२ त्रिशङ्कु
|
१३ धुंधुमार
|
१४ युवनाश्व
|
१५ मांधातृ
|
१६ सुसंधि
|
१७ ध्रुवसंधि — प्रसेनजित्
|
१८ भरत
|
१९ असित+१ कालिंदी+२ दुसरी एक.
|
२० सगर
|
२१ असमंज
|
२२ अंशुमत्
|
२३ दिलीप
|
२४ भगीरथ
|
२५ ककुत्स्थ
|
२६ रघु
|
२७ कल्माषपाद (सौदास)
|
२८ शंखण
|

२९ सुदर्शन

३० अग्निवर्ण

३१ शीघ्रग

३२ मरु

३३ प्रशुश्रुव

३४ अंबरीष

३५ नहुष[1]

३६ नाभाग

३७ अज सुव्रत

३८ दशरथ

राम भरत लक्ष्मण शत्रुघ्न

(वा०रा०अयो०–स०११०श्लो०३-३५)

## (२) दशरथाचा वंशवृक्ष.

दशरथ+(१)कौसल्या+(२)कैकेयी+(३)सुमित्रा




## (३) रावणाचा मातृपक्षीय वंश.

हेति+भया (कालभगिनी)

विद्युत्केश+सालकटंकटा

सुकेश+देववती

माल्यवान्+सुंदरी सुमाली+केतुमती माली+वसुदा

## (४) माल्यवानाचा वंशवृक्ष.

माल्यवान्+सुंदरी




---

१. नहुषाचा ययाति, ययातीचा नाभाग असेंही वर्णन आहे.

## (५) मालीचा वंशवृक्ष.




## (६) सुमालीचा वंशवृक्ष.




## (७) रावणाचा पितृपक्षीय वंश.



## (८) सुमतिवंश.

इक्ष्वाकु+अलंबुषा (बालकांड–स० ४७ श्लो० ११-१७.)
|
विशाल
|
हेमचंद्र
|
सुचंद्र
|
धूम्राश्व
|
सृंजय
|
सहदेव
|
कुशाश्व
|
सोमदत्त
|
काकुत्स्थ
|
सुमति[1]

## (९) जनकाचा वंश.

निमि (बालकांड–स० ७१ श्लो० ३-१३.)
|
मिथि
|
जनक
|
उदावसु
|
नंदिवर्धन
|
सुकेतु
|
देवरात
|

१. सुमति हा विशालपुरीचा राजा रामाच्या वेळीं होता [बालकांड–स० ४७ श्लो० १७].

५

बृहद्रथ
|
महावीर
|
सुक्षिप्ति
|
धृष्टकेतु
|
हर्यश्व
|
मरु
|
प्रतींधक
|
कीर्तिरथ
|
देवमीढ
|
विबुध
|
महीध्रक
|
कीर्तिरात
|
महारोमा
|
स्वर्णरोमा
|
ऱ्हस्वरोमा
|
जनक — कुशध्वज
|
सीता

## (१०) गंगेचा वंशवृक्ष.

मेरु (वा० रा० बाल०—स० ३५ श्लो० १३-२०.)
|
मेना+हिमवान्
|
गंगा — उमा+शंकर.

## (११) विश्वामित्राचा वंशवृक्ष.




वा० रा० बाल० स० ३२-३४, स० ५७ श्लो० ४, स० ६१ श्लो० १४-२१ पहा.

## (१२) जटायुवंशवृक्ष.



| पद्य. | पद्यांचा अर्थ. | पृष्ठ. |
|---|---|---|
| | **३९. अनुष्टुब्रामायण.** | |
| १ | उत्तरार्ध–दिग्रथनंदन. दिग्+रथ+नंदन=दहा दिशा+रथ+पुत्र. येथें 'दिग्' हा शब्द दश (दहा) बद्दल योजिला आहे. हल्लींही सामान्य संभाषणांत आपण अवतार, पांडव, वेद हे शब्द अनुक्रमें दहा, पांच व चार यांबद्दल योजितों. | १ |
| ३ | उत्तरार्ध–'महा' याचें विशेष्य 'आधि.' | " |
| ४ | पूर्वार्ध–असें शत–येथें 'शत' म्हणजे शंभर असा अर्थ विवक्षित नाहीं, अनेक प्रकारचीं अस्त्रें. ताटका अत्युग्रा, पर (तथापि) मारवी. | " |
| ५ | पूर्वार्ध–'खर 'म्हणजे मारीच सुबाहु इत्यादि तीव्र क्रूर (राक्षस) असा अर्थ घेतला तरी चालेल. | २ |
| ११ | या पद्यांत **क्रम** (यथासंख्य), **व्यतिरेक** आणि **उपमा** असे तीन अलंकार आहेत. 'उपमेयोपमानानां क्रमसंबंधः क्रमः' (१७) [वामन–काव्यालंकारसूत्राणि–चतुर्थ अधिकरण–तृतीय अध्याय–काव्यमाला. १५. पृ० ५४.] उपमेय आणि उपमान यांमध्यें क्रमानें संबंध लागत गेला म्हणजे **क्रम**नामक अलंकार होतो. या पद्यांत म्लानि सारसास आणि कंटक केतकास असा क्रमानें संबंध आहे. आतां हा संबंध उपमेयोपमानांत नाहीं, तथापि हा क्रमानेंच आहे म्हणून याला **यथा-संख्य** म्हणणें हेंच प्रशस्त होय. पुर आणि सारस किंवा केतक या उपमेयोपमानांत सारसकेतक यांस दोष आहेत, पण पुराला नाहींत असें वर्णिलें आहे म्हणून हा **व्यतिरेका**लंकार झाला. 'सार साकेत स्वयशें कापुरा हांसे' म्हणजे कापुराच्या शुभ्रत्वाहून साकेत नगराचें यश शुभ्रतर होतें–असा भाव. येथें **उपमा** अलंकार झाला आहे, कारण 'हांसे' हा शब्द सादृश्यसूचक आहे. उपमेची प्रतीति अभिधालक्षणा आणि व्यंजना यांच्या द्वारें होते. **काव्यादर्शकार दंडी** म्हणतोः— आक्रोशत्यवजानाति कदर्थयति निंदति । विडंबयति संधत्ते हसतीर्ष्यत्यसूयति. ॥ ६२ ॥ तस्य मुष्णाति सौभाग्यं तस्य कांतिं विलुंपति । तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति. ॥ ६३ ॥ + + + + तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः । उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः ॥ ६५ ॥ [दंडी–काव्यादर्श–द्वितीय परिच्छेद. पृ० १३३]. यशाचा व हास्याचा रंग शुक्ल आहे असा कविसंकेत आहे. | |

| पद्य. | पद्यांचा अर्थ. | पृष्ठ. |
| --- | --- | --- |
| | यास आधार:–तिमिरस्य तथा मुष्टिग्राह्यत्वं सूचिभेद्यता । शुक्लत्वं कीर्तिपुण्यादौ कार्ष्ण्यं चाकीर्त्यघादिषु. ॥ प्रतापे रक्ततोष्णत्वे रक्तत्वं क्रोधरागयोः । ज्योत्स्नापानं चकोराणां सेवालं सर्ववारिषु ॥ [केशवमिश्रकृत **अलंकारशेखर**–१५ मरीचि.] | २ |
| १३ | 'मंथराभिन्नधी' हें कैकयीचें साभिप्राय विशेषण आहे. तिनें वर मागण्याचें कारण या विशेषणानें ध्वनित केलें आहे म्हणून हा **काव्यलिंग** अलंकार होय. एकाद्या अर्थाचें समर्थन करण्याची आवश्यकता असतां त्याचें समर्थन केलें म्हणजे **काव्यलिंग** अलंकार होतो. 'काव्यलिंगं हेतोर्वाक्यपदार्थता' [काव्यप्रकाश.] या लक्षणावरून यांत कार्यकारणभाव स्वीकारलेला असतो. येथें कैकेयीनें असा कठिण वर मागणें योग्य नसतां कां मागितला या अर्थाचें समर्थन करणें आवश्यक होतें. म्हणून लिंगरूपानें (विशेषणरूपानें) त्याचें समर्थन केलें आहे. या अलंकाराचें लक्षण:–काव्यलिङ्गं हेतुना स्यात्समर्थ्यसमर्थनम् । वाक्यार्थत्वे पदार्थत्वे हेतोर्द्वैविध्यमिष्यते ॥ जितोऽनया स्मरो नूनं यामालिंगति वल्लभः । कंदर्पमजयद्विप्रस्त्रिनेत्राक्रान्तमानसः ॥ १६४ ॥ [मंदारमरंदचंपू–१० व्यंग्यबिंदु–काव्यमाला, पृ० १४१] उत्तरार्ध–तो=दशरथ राजा. | ३ |
| १५ | श्रीसत्यधर्म रक्षाया=शोभादायक असा सत्यधर्म पाळण्यासाठीं (श्रीरामानें) क्षिती (पृथ्वी) सोडिली. | ,, |
| १९ | प्रिय हित=हें 'प्रभू'चें विशेषण करावें. प्रिय अशा व हित अशा प्रभूचें उक्त. | ४ |
| २० | भवार्णवीं–भवार्णवापासून येथें ही सप्तमी पंचम्यर्थी समजावी. | ५ |
| २१ | सूर्याच्या कन्यकामना–येथें सूर्यकन्यकामना असा समस्त शब्द पाहिजे होता. सूर्य शब्दाला षष्ठी दृष्ट ठेविली आहे हें प्रशस्त नाहीं. हें लक्षांत ठेवण्यासारखें उदाहरण आहे. 'सापेक्षत्वेऽपि गमकत्वात्समासः'. | ,, |
| २२ | साधुजन हे ईश्वरप्राप्तीस्तव तपस्या करतात, त्यांना प्रभु स्वतः आपल्या कार्यासाठीं आल्यामुळें आयताच सांपडला. यत्न केल्यावांचून कार्यसिद्धि अथवा फलप्राप्ति वर्णिली असतां **प्रहर्षण**नामक अलंकार होतो म्हणून हें या अलंकाराचें उदाहरण होय. याचें **मंदारमरंदचंपूंत** लक्षण असें केलें आहे. अथ प्रहर्षणम्–अपेक्षितार्थसिद्धिश्चेद्विना यत्नं प्रहर्षणम् । राधिकासंगमोपायचिंतां कुर्वति माधवे । स्वयमेवागता सा तमालिलिंग मुदा तदा ॥ १७४ ॥ अपेक्षिताधिकार्थस्य सिद्धिश्चान्यत्प्रहर्षणम् ॥ या- | |

| पद्य. | पद्यांचा अर्थ. | पृष्ठ. |
|---|---|---|
| | चते घटिकामेकां राधां सङ्गसुखं हरिः । अहोरात्रं सहानेन सापि रेमे मनस्विनी ॥ १७५ ॥ फलस्योपायसिद्ध्यर्थं प्रयत्ने च कृते सति । तदैव फललाभश्चेत्तृतीयं स्यात्प्रहर्षणम् ॥ राधिकानयनार्थाय दूतीमन्वेष्टुमुद्यतः । मध्येमार्गं नन्दसूनू राधिकामेव दृष्टवान् ॥ १७६ ॥ [मंदारमरंदचंपू-पृ० १४३.] उत्तरार्धांत प्रभूवर ताताची संभावना केली आहे म्हणून ही **उत्प्रेक्षा** होय. | ५ |
| २४ | गुणौघनटचत्वर-यांत **रूपकालंकार** झाला आहे. | ,, |
| २६ | श्लोक २५ यांत भरताच्या भाषणास आरंभ झाला असून तें या २६ व्या श्लोकांत पूर्ण झालें आहे. [हे] भरता! [तिचा आचार] सन्मनीं तोषाचा त्याग हेतु [होय.] (संताच्या अंतःकरणांत संतोषाचा नाश होण्यास तिचा आचार कारण होय. त्या कैकयीचा आचार साधुमनांचा तोष नष्ट होण्यास कारण होय) [हे] ताता! (दशरथा) शक्रा (इंद्राला) लाजसी (कैकेयीच्या दुष्ट कृत्यानें स्वर्गलोकीं इंद्राला तोंड दाखविण्यास तुला लाज वाटत असेल) [हे] भरता! हे (कैकेयी) तुला जशी [तशी] कोणा नसे (हे भरता! ही दुष्ट आई जशी तुला मिळाली आहे तशी इतर कोणाला नाहीं, अशी दुष्ट आई इतर कोणाला प्राप्त झाली नाहीं) हें भरत स्वतःलाच उद्देशून म्हणत आहे. 'सन्मनिं त्याज्य तोषाचा भरता! हेतु, लाजसी' असा कदाचित् पाठ असावा. याचा अर्थ असाः—[हे] भरता! [तिचा आचार] सन्मनिं (साधुमनाला) त्याज्य (गर्हणीय, घेण्यास अयोग्य, स्वीकार करण्यास अनुचित, निंद्य अशा) तोषाचा हेतु (कारण) [होय]. प्रथमतः जो अर्थ दिला आहे त्यांत 'त्याग' शब्दाच्या विभक्तीची अव्यवस्था होते हा दोष आहे. [हे] भरता! [तिचा आचार, कैकेयीचा आचार=पद्य २५] सन्मनिं (साधूच्या अंतःकरणांत) तोषाचा (आनंदाचा) हेतु (कारण, तिचा आचार साधूच्या मनाला तोष देण्यास कारणीभूत आहे-असा समज) त्याग (टाक, सोडून दे)—असाही कदाचित् अर्थ होईल. | ,, |
| २७ | पूर्वार्धांत **काव्यलिंग** अलंकार झाला आहे. माता अत्याज्य असतां तिचा त्याग करण्याचें कारण 'लोभांधमति' आणि 'उद्धता' या दोन साभिप्राय विशेषणांनीं प्रदर्शित केलें आहे. | ,, |
| २८ | उत्तरार्ध—तो (भरत) त्या राज्या (त्या भावाच्या राज्याला) ज्ञानादरें (ज्ञानाचा आदर करून, वसिष्ठमुनीचा उपदेश स्वीकारून) वर | |

२

| पद्य. | पद्यांचा अर्थ. | पृष्ठ. |
|---|---|---|
| | (मोठी) विक्रिया (फेरफार, विकृति, बदल, कलाहीनता, निस्तेजस्कता) धरवी (धरण्यास लावी) भरतानें गुरूपदेशाचा आदर केला आणि राज्याचा त्याग केला म्हणून राज्य विकृत (कलाहीन, निस्तेज) झालें. आतां 'त्या राजा झामादरें तो धरवी वर विक्रिया' असा पाठ स्वीकारला असतां अर्थ निराळा केला पाहिजे. त्या राजा (त्या भरताला, त्या भरताकरवीं) तो (गुरु वसिष्ठमुनि) वर विक्रिया (श्रेष्ठ अशी मनोविकृति) धरवी (धरण्यास लावी, धारण करवी). यांतील व पुढें श्लोक १२४ यांतील यमकरचना सारखीच आहे. | ५ |
| २९ | तापली=रामाचा नाश करण्यासाठीं भरत चालला आहे असें वाटल्यामुळें गुहाची मति संतप्त झाली. तेव्हां भरतानें आपला शुद्ध भाव त्या गुहाला कळविला. | ६ |
| ३१ | वासरास पाहून जसें गाईला तसें भरताला पाहून रामाला प्रेम उत्पन्न झालें–असा भाव. तातवृत्तविषें=तात (दशरथ)+वृत्त (मरणाची वार्ता)+विषें विषानें, बंधु (भरत) तिघे (राम, लक्ष्मण आणि सीता यांस) तप्तकर्ण (दुःखितश्रोत्र) करी. | ,, |
| ३३ | उत्तरार्ध–हे सुधेची पिल्या दावि चव, हर्षें रहा, सहा–असा अन्वय. यांत **संदष्टक** नामक यमक आहे. [मागें पृ० २ टीप २० पहा.] | ,, |
| ३६ | अनसूयेनें श्रीलाही (सीतेला–पक्षीं–लक्ष्मीलाही) अलंकारिलें यांत **अतिशयोक्ति** अलंकार आहें. 'अंगरागदा' हें साभिप्राय विशेषण आहे म्हणून हा **परिकर** अलंकार होय. 'श्रीलाही' हें साभिप्राय विशेष्य आहे म्हणून हा **परिकरांकुर** अलंकार होय. 'साभिप्रायं विशेष्यं चेत्प्रोक्तः परिकरांकुरः' असें याचें लक्षण आहें. याचें उदाहरणः–'त्वदंगालोकने तन्वि! पौलोमीवल्लभः पटुः' [मंदारमरंदचंपू–अर्थबिंदु–पृ० १२८]. परिकराचें सोदाहरण लक्षणः–'परीकरः परिकरः साभिप्राये विशेषणे! दद्यात्ते संपदो राजन्। केशवः कमलापतिः ॥ [मंदारमरंदचंपू–पृ० १३०]. उत्तरार्धांत **उपमा** अलंकार आहे. | ,, |
| ३७ | 'विराधाच्या शापवारणें' हें 'विराधशापवारणें' असें समस्त पद पाहिजे होतें, येथें षष्ठी दृष्ट ठेवून जो अलुक् समास केला आहे तो प्रशस्त नाहीं. [मागें श्लोक २१ टीप पहा.] उत्तरार्धांत **'विरुद्धार्थदीपक'** अलंकार झाला आहे. येथें 'रणें' या एकाच साधनानें साधु निववणें आणि वैरी तापविणें या विरुद्ध क्रिया करावयास सांगितलें आहे | |

| पद्य. | पद्यांचा अर्थ. | पृष्ठ. |
|---|---|---|
| | म्हणून हा 'विरुद्धार्थदीपक' अलंकार होय. याचें लक्षण:—अवलेपमनंगस्य वर्धयंति बलाहकाः । कर्शयंति तु धर्मस्य मारुतोद्धूतशीकराः ॥ १०९ ॥ अवलेपपदेनात्र बलाहकपदेन च । क्रिये विरुद्धे संयुक्ते तद्विरुद्धार्थकदीपकम् ॥ ११० ॥ [दंडी–काव्यादर्श–परिच्छेद २ पृ० १५९]. | ६ |
| ३९ | उत्तरार्ध—यांत प्रश्न अलंकार झाला आहे. यांत 'प्रेमा' शब्द आला आहे तो पुल्लिंगीं आहे मोरोपंत नेहमीं संस्कृत भाषेच्या लिंगनिर्देशास अनुसरतात, त्याचीं उदाहरणें त्यांचीं काव्यें वाचीत असतांना जागोजाग आढळतात. उदाहरणार्थ, स्वप्न, विघ्न, दारा, मित्र, नयन, नेत्र इत्यादि शब्दांचीं लिंगें संस्कृतांत जीं आहेत तीच पंतांनीं आपल्या काव्यांत कायम ठेविलीं आहेत. प्रस्तुत 'प्रेमा' हा शब्द संस्कृतांत पुल्लिंगी असून मराठींत त्याचें नपुंसकलिंग करण्याची वहिवाट आहे. पंतांनीं आपली नेहमींची वहिवाट सोडून 'प्रेम'शब्दाचें लिंग मराठी भाषेच्या वहिवाटीस अनुसरून नपुंसकलिंग क्वचित् ठेविलें आहे. प्रायः या शब्दाचें लिंग संस्कृताप्रमाणेंच पुल्लिंग ठेविलें आहे. उदाहरण—'माझा प्रेमा सुदामा हरिसख दुबळा शब्दसंदोह जो हे, [कृष्णविजय–पूर्वार्ध–उपसंहार; 'प्रेमा कैसा किती हा पटु अपटु असे कीं नसे दंभगर्व.' [कृष्णविजय–उत्तरार्ध–उपसंहार श्लोक ३.] | ७ |
| ४३ | उत्तरार्धांत काव्यार्थापत्ति अलंकार दंडापूपिकान्यायानें झाला आहे. ज्या प्रभुतेजापुढें तेजस्वी वज्र टिकत नाहीं त्यापुढें शत्रूच्या वाखराची कथा काय ? अर्थात् तें नष्ट होणार हें सहज आहे. प्रभुतेजें तेजस्वी वज्र तुरे (मग) पर (शत्रु) वाखर काय होय ? | ८ |
| ४४ | उत्तरार्धांत अर्थान्तरन्यास अलंकार आहे, 'मूढा दुर्बुद्धि आवडे' या सामान्यार्थाचें समर्थन 'गाढवा जेंवि गाढवी' या विशेषार्थानें केलें आहे. | ,, |
| ४५ | साबळें=साधें, भोळसर (मन). | ,, |
| ४६ | प्रसादरत्नयोग्या वरा सती धिक् कवडी दे, ती सत्तापें ताप भोगसा देवरास दवडी—असा अन्वय. प्रसादरूप रत्नास योग्य (पात्र) जो [व] वरा म्हणजे श्रेष्ठ असा जो लक्ष्मण त्याला सती (सीता) धिक् कवडी दे. लक्ष्मण इतका सुशील व योग्य होता कीं त्याजवर प्रसाद (कृपा) करणें योग्य होतें; असें असतां प्रसादरत्नाचे बदला त्याचा धिक्कार | |

| पद्य. | पद्यांचा अर्थ. | पृष्ठ. |
|---|---|---|
| | केला व विनाकारण त्यास दुखविलें. हा जो ताप त्या साधूस (लक्ष्मणास) सीतेनें दिला त्या (सत्तापें) साधुतापामुळें स्वतः ताप भोगण्यासाठीं (दीरास) दवडी (घालवी) म्हणजे साधु लक्ष्मणास दुष्ट भाषण करून दुखविलें, त्यामुळें सीतेस दुःख भोगावें लागलें; कटु भाषण करून लक्ष्मणास वनांत घालविलें, त्यामुळें रावणास संधि सांपडून त्यानें सीतेस नेलें हें दुःख सीतेस भोगावें लागलें तें लक्ष्मणास कटु भाषण केल्याबद्दल—असें तात्पर्य. येथें प्रसाद आणि रत्न व धिक् आणि कवडी यांचें ताद्रूप्य वर्णिलें आहे, म्हणून **ताद्रूप्यरूपक** अलंकार झाला आहे. 'ताद्रूप्यस्य समारोपे सति ताद्रूप्यरूपकम्' [मंदारमरंदचम्पू-पृ० ११८] उपमानोपमेयांचा भेद असून ज्यांत उपमानधर्मांचा मात्र आरोप असतो तें **ताद्रूप्यरूपक** होय. उत्तरार्धांत '**हेतु**' अलंकार आहे. जेथें हेतुमानासह (कार्यासह) हेतूचें (कारणाचें) कथन असतें तेथें **हेतु** अलंकार होतो. याचें लक्षणः— 'कार्येण साकं हेतोश्चेद्वर्णनं हेतुरुच्यते । प्राचीनम् । एष ते विद्रुमच्छायो मरुमार्ग इवाधरः । कस्य नो तनुते तन्वि! पिपासाकुलितं मनः ॥२००॥ केचित्प्रचक्षते हेतुं हेतुकार्यैक्यवर्णनम् । दुर्जनानामर्चनैव गांभीर्यं विदुषां महत् ॥ [मंदारमरंदचंपू-पृ० १४९] प्रस्तुत पद्यांत दवडणें हें कारण (हेतु) यापासून ताप भोगणें हें कार्य (हेतुमान) उत्पन्न होतें म्हणून हा **हेतु** अलंकार जाणावा. | ८ |
| ४७ | 'एकली' हें साभिप्राय विशेषण आहे म्हणून **परिकर** अलंकार आहे. सर्वनाशार्थ=सगळ्या ऐश्वर्याचा, कुटुंबाचा व राक्षसांचा नाश व्हावा म्हणून. | ,, |
| ४८ | दापित्या—शासन करणाऱ्याला. भंगी—पराभव करी. उत्तरार्ध—रावणानें धर्मयुद्ध केलें नाहीं, कपटयुद्ध केलें असें ध्वनित केलें आहे. | ९ |
| ४९ | कुधी=दुष्टबुद्धि रावण. यांतील विशेषणें साभिप्राय आहेत म्हणून **परिकर** जाणावा. | ,, |
| ५० | शोधिली=शुद्ध, पावन, केली, गंगोदकाप्रमाणें तीनही लोकांस पवित्र करण्यास समर्थ अशी जिची कीर्ति ती (सीता) लंकावनीं (लंका+वनीं=राहण्याच्या जागेंत; वन=राहण्याची जागा, वसतिस्थान) (लंकेंतील एका वसतींत) अशोकवनीं नेउनि रोधिली. पूर्वार्धांत **उपमा** आहे. | ,, |

| पद्य. | पद्यांचा अर्थ. | पृष्ठ. |
|---|---|---|
| ५१ | करुणें (शोकें=करुणाकर शोकानें) तो रामाचा विलाप जनांला आयकों दिला नाहीं ही जनांवर शोकाची मोठी कृपाच होय. अत्यंत शोकेंकरून राम जेव्हां मोह पावे तेव्हां विलापशब्द बंद पडे, ही प्राणिमात्रावर शोकानें मोठी कृपा केली–असें तात्पर्य. | १० |
| ५२ | साक्षात् तातघात लेखिला–यांत अभेदरूपक आहे. | ,, |
| ५४ | बा! (रामा!) असीमोग्रें (अत्यंत उग्र अशा रावणानें) [माझ्या] यशा हानि व्हाया (होण्यासाठीं) असी (खड्ग) हाणिला (मला मारिला). | ,, |
| ५५ | त्यासि मांडिला दे=मरणकाळीं पुत्रानें आपली मांडी मरणाऱ्या बापाच्या अथवा इतर गुरुजनांच्या उशाखालीं देऊन आधार घ्यावा असा पितृप्रेमसूचक आचार प्रचलित आहे. | ,, |
| ५६ | धन्यधन्यें=अत्यंत धन्य जो जटायु त्यानें, प्रत्यक्ष रामाची मूर्ति अवलोकित असतां प्राण सोडिला ही त्याची विशेष धन्यता होय. | ,, |
| ५७ | योजनबाहुला=कबंधाचे बाहु योजनप्रमाण लांब होते त्याला. | ,, |
| ६२ | पुत्रसुस्वामिप्रियत्वें=सुस्वामिप्रिय ज्याला त्याचा भाव तें सुस्वामिप्रियत्व, पुत्राचें (हनुमंताचें) सुस्वामिप्रियत्व (प्रभूला आवडतेंपण) जें त्यानें आपल्या पुत्रास (मारुतीला) चांगल्या प्रभूचें (रामाचें) प्रियत्व आहे असें पाहून मारुतें (वायूनें, मारुतीच्या पित्यानें) हर्ष (आनंद) धरिला (मानिला). आपला पुत्र जो मारुति त्याविषयीं सुस्वामीचें (रामचंद्रासारख्या उत्तम प्रभूचें) प्रियत्व (प्रेम) पाहून वायूला आनंद झाला. उत्तम स्वामीला आवडला असा पुत्र (मारुति) आपणांस आहे अशा भावानें वायूला मोठा आनंद झाला. यांत छंदोभंगही मानण्याचें कारण नाहीं. | ११ |
| ६३ | सहा=सोसा, सहन करा, मान्य करून घ्या, श्रीरामाचा महिमा अगाध आहे, यास्तव लोहपरिसाचा दृष्टांत जरी कमी योग्यतेचा असला तरी त्याचा अनादर करूं नका. दिलेला दृष्टांत कवीला योग्यसा वाटला नाहीं म्हणून परिसा (ऐका) व सहा (सहन करा, क्षमा करा) असें म्हटलें आहे. [लोह परिसाची न साहे उपमा । सद्गुरुमहिमा अगाधची–तुकाराम.] | ,, |
| ६४ | कां न मानावा? यांत प्रश्न अलंकार आहे. 'हातकांकणें' हा प्राकृत शब्दांचा समास ध्यानांत ठेवण्यासारखा आहे. | १२ |

| पद्य. | पद्यांचा अर्थ. | पृष्ठ. |
|---|---|---|
| ६५ | श्रीत्यक्त नग=श्रीनें (सीतेनें) त्यक्त (टाकलेले) नग (अलंकार) सीतेनें विमानांतून ऋष्यमूक पर्वतावर टाकिलेले दागिने. 'समानशीलव्यसनेषु सख्यम्' या न्यायानें रामानें अलंकार हृदयीं लाविले हें युक्तच होय. | १२ |
| ६६ | 'प्रभूत्तम' हें साभिप्राय विशेष्य आहे म्हणून हा **परिकरांकुर** अलंकार होय. | ,, |
| ६८ | क्रौर्यें=वालीच्या क्रूर वर्तनानें, सुग्रीवाविषयीं वालीनें जो क्रूरपणा केला त्यानें. नाडिला=नागविला, बुडविला, वालीचा नाश केला. | ,, |
| ६९ | दिलीप=रामाचा २४ वा पूर्वज होय. | ,, |
| ७० | कोटि कोटि=कोट्यवधि, कोटिशः, पुष्कळ, बहुसंख्य. ही द्विरुक्ति अगणितार्थसूचक आहे. सुगलाच्या=सुग्रीवाच्या. | ,, |
| ७१ | श्री=सीता. अन्यत्र=दक्षिणेतर दिशांस. मास=सुग्रीवानें नेमून दिलेला एक महिन्याचा अवधि. | ,, |
| ७४ | पूर्वार्ध—यांत **अत्युक्तिनामक** अलंकार आहे. जेथें अद्भुत व अतथ्य असत्य) अशा शौर्यौदार्यादि गोष्टीचें वर्णन असतें तेथें **अत्युक्ति** अलंकार होतो प्रस्तुत पद्यांत समुद्राला गोष्पदत्व दिलें आहे. हें वर्णन अद्भुत असून कविप्रतिभानिर्मित असल्यामुळें असत्य आहे व तेणेंकरून त्या कपिरायाचा पराक्रमोत्कर्ष दाखविला आहे, म्हणून हा **अत्युक्तिनामक** अलंकार होय. याचें सोदाहरण लक्षणः—अद्भुतासत्यकथनं मतात्युक्तिरलंकृतिः । त्वत्प्रतापाग्निना सप्त सागरा अपि शोषिताः । पुनस्त्वद्वैरिकान्ताक्षिवारिभिः परिपूरिताः ॥ २०२ ॥ [मंदारमरंदचंपू-पृ० १४९-१५०] उत्तरार्ध-यांत **यथासंख्य अनुभयसारूप्यरूपक** आणि **उत्प्रेक्षा** असे अलंकार आहेत, तवारिभ्र हें स्तन्य (दुग्ध) आणि स्वर्गिवृंद हें तोक (बालक) असा येथें अनुक्रम आहे म्हणून हा **यथासंख्य** अलंकार होय. याच अलंकाराला कांहीं साहित्यशास्त्रकार 'क्रम' असें म्हणतात. यांत सारूप्य वर्णिलें आहे तें अधिकतान्यूनताविरहित आहे म्हणून **अनुभयसारूप्यरूपक** होय. वरिभ्राचा धर्म धाव्यत्व असतां त्याजवर प्राशनीयत्वाची संभावना केली आहे म्हणून **उत्प्रेक्षा** अलंकार झाला आहे. | १३ |
| ७५ | सुखदुःखहि पावे=जानकी दिसली म्हणून सुख आणि ती राक्षसीसमवेत म्हणून दुःख—असा भाव. | ,, |

| पद्य. | पद्यांचा अर्थ. | पृष्ठ. |
|---|---|---|
| ७६ | रावण आपणा (स्वतःला) म्हणे (म्हणाला) [सीतेचें उत्तर ऐकून रावण स्वतःला म्हणाला] [हे रावणा!] समुत् (आनंदयुक्त) हो [व] तर (भवसागर तरून जा). सीतेचें उत्तरः—'हन्तुं त्वां समरे रामो लक्ष्मणेन समन्वितः। आगमिष्यत्यसंदेहो द्रक्ष्यसे राक्षसाधम ॥ ३५ ॥ [अध्यात्म-रामायण—सुंदरकांड—सर्ग २] रावणाचा हेतुच असा होता कीं आपणास रामाचे हातून मरण यावें आणि आपण मुक्तीस जावें. हा हेतु सिद्धीस जातो अशा प्रकारचें सीतेचें भाषण त्यास प्रिय वाटलें व त्यानें मुक्तीची आशा बाटली [अध्यात्म०-अ०कां०—स० ५ श्लो०६०।६१; सुं० कां०—स० २ श्लो० १५।१९; यु० कां०—स० १० श्लो० ६०-६१पहा.] | १४ |
| ८५ | राम मारुतीस म्हणे, या उपकारा (सीताशुद्धि केलीस या उपकाराबद्दल स्वप्राण (मीं आपले प्राण) तुला दिले (आहेत). पुढें (जो उपकार) करिशील त्याचा (त्या उपकाराबद्दल) मी (तुझा) ऋणी होईन—सीतेचा शोध लाविलास हे तुझे उपकार मी आपले प्राण तुझे स्वाधीन करून फेडिले, पण यापुढें जो उपकार तूं करिशील तो फेडण्यास मजजवळ कांहीं साधन राहिलें नाहीं म्हणून मला नेहमीं तुझे ऋणांत राहिलें पाहिजे. | १५ |
| ८७ | पूर्वार्ध—सुमुहूर्तीं=उत्तम मुहूर्तावर, विजयमुहूर्तावर. रामाची रावणावर स्वारी अभिजिन्नामक विजयमुहूर्तीं उत्तराफाल्गुनी नक्षत्रीं निघाली. [रामायण—युद्धकांड—स० ४ श्लो० ३—५.] | ,, |
| ९० | 'ओ देऊनि' यांत लोकोक्ति अलंकार आहे, कारण यांत लोकप्रवादाचा अनुकार झाला आहे. | ,, |
| ९२ | सरमा सांगे (सीतेला):—[हे] सखि [सीते!] या (ज्याचें शिर व चाप तुझ्या पुढें आहे त्या) पापहा (पापहंत्या, दुष्टहंत्या रामचंद्राला) सत्य न पहा (खरा आहे असें मानूं नकोस—हा खरा राम नव्हे.) | ,, |
| ९९ | अवलक्षण=कुलक्षणी रावण. | १६ |
| १०१ | खवळे (खवळला, क्रोधाविष्ट झाला) [आणि] सर्व सेनेच्या क्षया (नाश करावयासाठीं) सगळे (सर्व योद्ध्यांला) कवळी (गोळा करिता झाला, कवळिता झाला). | ,, |
| १०२ | स्वर्गीं मुनीचें वर्तन होय व रावणीं शोकाचें नर्तन होय. रामानें कुंभकर्णाचे हात पाय व मस्तक तोडले तेव्हा कुंभकर्ण मेला म्हणून आ- | |

| पद्य. | पद्यांचा अर्थ. | पृष्ठ. |
|---|---|---|
| | नंदानें मुनी अंतरिक्षांत नाचूं लागले, व कुंभकर्ण मेला म्हणून रावणास दुःख झालें म्हणून रावणाचे अंगांत शोक नाचूं लागला. (रावणाला बंधुमरणानें अतिशयित दुःख झालें–असा भाव.) | १६ |
| १०४ | त्यावरि=त्यानंतर. | १७ |
| १०९ | कुंभज (कुंभापासून उत्पन्न झालेला) अगस्त्य. मित्रावरुणांचें रेत उर्वशीला पाहतांच कुंभांत पडलें व तेथें त्या रेतापासून तात्काल अगस्त्य उत्पन्न झाला अशी कथा सायनाचार्य यांनीं भाष्यांत दिली आहे [ऋग्वेद–७।३३।११] यास्कनिरुक्तांत अगस्त्याची कुंभजन्मकथा सांगितली आहे ती अशीः—'तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम् । रेतश्चस्कंद तत्कुंभे न्यपतद्वाशतीवरे ॥ तेनैव तु मुहूर्तेन वीर्यवंतौ तपस्विनौ । अगस्त्यश्च वशिष्ठश्च तत्रर्षी संबभूवतुः ॥ बहुधा पतितं रेतः कलसे च जले स्थले । स्थले वशिष्ठस्तु मुनिः संबभूवर्षिसत्तमः ॥ कुंभे त्वगस्त्यः संभूतो जले मत्स्यो महाद्युतिः । उदियाय ततोऽगस्त्यः शम्यमात्रो महातपाः ॥ मानेन संमितो यस्मात् तस्मान्मान्य इहोच्यते । यद्वा कुंभादृषिर्जातः कुंभेनापि महीयते ॥' | १९ |
| ११८ | शत शिरें=रावणाचें शिर तोडलें तरी तें पुनः उत्पन्न व्हावें असा रावणाला ब्रह्मदेवाचा वर होता. त्याचा वध नुसतें शिर तोडल्यानें व्हावयाचा नव्हता. त्याच्या नाभिप्रदेशीं अमृत होतें तें अग्न्यस्त्रानें शोषण करून नंतर रामानें त्याचा वध केला. 'चिंतेंत हृदया ! शिरें'–येथें वस्तुतः हृदय हा आधार व चिंता ही आधेय असा प्रकार असतां चिंतेला आधार आणि हृदयाला आधेय केलें आहे, म्हणून हा **अधिकध्वनिनामक** अलंकार होय. जेथें मोठ्या आधाराहून आधेयाचें आधिक्य वर्णिलें असतें तेथें **अधिक** अलंकार होतो. याचे भेद दोन=आधाराहून आधेयाचें गुरुत्व (किंवा आश्रयाचें परिमितत्व असून आश्रिताचें वैपुल्य) आणि दुसरा आधेयाहून आधाराचें गुरुत्व (किंवा आश्रिताचें परिमितत्व असून आश्रयाचें वैपुल्य). प्रस्तुत पद्यांत चिंतेचें गुरुत्व ध्वनित केलें आहे म्हणून हा **अधिकालंकारध्वनि** होय. याचें लक्षणः–(अथाधिकम्—) आधाराधेययोरानुरूप्याभावोऽधिकं द्विधा ॥ पृथुलादपि चाधारादाधेयाक्षेपया स्वतः । आधेयाधिक्यकथनमधिकं प्रथमं मतम् ॥ अनंतेष्वपि वेदेषु न विश्राम्यति ते स्तुतिः । विशालादपि चाधेयादाधाराक्षेपया स्वतः । आधाराधिक्यकथनं | |

